गुरुकुल ग्रन्थावलिः

पञ्चम पुस्तकम्

# संशोधित हितोपदेशः

( व्याख्या टिप्पणी व्याकरणनियमादिभिः संवलितः )

गुरुकुलस्थ पण्डितैः संशोधितः

---

# SANSHODHIT HITOPADESH.

[ With Critical and Explanatory Notes. ]

GURUKULA SANSKRIT SERIES.

Fifth Book.



---

तृतीयावृत्तिः १०००

सम्वत् १९८६

मूल्यम् ॥)

## ब्रह्मचर्य-सन्देश

लेखक—प्रो० सत्यव्रत जी सिद्धान्तालङ्कार; भूमिका लेखक—
स्वर्गीय स्वामी श्रद्धानन्द जी महाराज

## पुराणमत पर्यालोचन

ले०—आचार्य रामदेव जी

अष्टादश पुराणों की पूर्णतया मीमांसा करने वाला तथा पुराण रूपी महासागर में भरे हुए विविध विषयों का युक्तियुक्त आलोचन करने वाला यह ग्रन्थ है। शैव, वैष्णव, शाक्त आदि साम्प्रदायों के मन्तव्य और उनकी समालोचना, मूर्तिपूजा, श्राद्ध, अवतारवाद और बहुदेवता-वाद आदि विवादास्पद धार्मिक विषयों की आलोचना तथा देवताओं की उत्पत्ति का प्रकार आदि महत्वपूर्ण विषयों पर इस ग्रन्थ में विस्तृत विचार किया गया है। कुछ भाइयों का विचार है कि पुराण केवल मात्र गप्पों के भंडार हैं। उन्हें भी पुराणों का वास्तविक रहस्य तथा महत्व जानने के लिए यह ग्रन्थ अवश्य पढ़ना चाहिये। इस ग्रन्थ में पुराण तथा पौराणिक मतों की निष्पक्ष और यथायोग्य समालोचना की गई है। बड़े आकार के ५४० पृष्ठ; छपाई सफ़ाई सुन्दर; मूल्य केवल ३)

* ओ३म् *

# हितोपदेशः ।



**प्रस्ताविका ।**

**पाटवम् । अहार्यत्वात् । अनर्घत्वात् । अक्षयत्वात् ।**

**प्रतिपत्तये । भाजने ।**

---

श्रुतो हितोपदेशोऽयं[1] पाटवं संस्कृतोक्तिषु ।
वाचां सर्वत्र वैचित्र्यं नीतिविद्यां ददाति च ॥ १ ॥
अजरामरवत्प्राज्ञो विद्यामर्थंच चिन्तयेत् ।
गृहीत[2] इव केशेषु मृत्युना धर्ममाचरेत् ॥ २ ॥
सर्वद्रव्येषु विद्यांहि द्रव्यमाहुरनुत्तमम् ।
अहार्यत्वादनर्घत्वादक्षयत्वाच्च सर्वदा ॥ ३ ॥
विद्या ददाति विनयं विनयाद्याति पात्रताम् ।
पात्रत्वाद्धनमाप्नोति धनाद्धर्मं ततः सुखम् ॥ ४ ॥
विद्या शस्त्रस्य शास्त्रस्य द्वे विद्ये प्रतिपत्तये ।
आद्या हास्याय वृद्धत्वे द्वितीयाद्रियते सदा ॥ ५ ॥
यन्नवे भाजने लग्नः संस्कारो नान्यथा भवेत् ।
कथा[3]च्छलेन बालानां नीतिस्तदिह कथ्यते ॥ ६ ॥



---

१. अतोरोरप्लुता दप्लुते—इत्युत्वम् । ६ । १ । ११३ ।
२. भोभगो अघो अपूर्वस्य योऽशि—इति यादेशः । ८ । ३ १७ ।
लोपः शाकल्यस्येति लोपः । ८ । ३ । १९ ।
३. दीर्घाच्चेतितुक् । ६ । १ । ७५ ।

उच्छेदि । अविवेकिता । उद्विग्नमनाः । सकृद्दु ।

---

मित्रलाभः सुहृद्भेदो विग्रहः संधिरेव च ।
पञ्चतन्त्रात्तथाऽन्यस्माद्ग्रन्थादाऽऽकृष्य लिख्यते ॥ ७ ॥

**अस्ति भागीरथीतीरे पाटलिपुत्रं नाम नगरम् । तत्र सर्व-स्वामिगुणोपेतः सुदर्शनो नाम नरपतिरासीत् । स भूपति रेकदा केनापि पठ्यमानं श्लोकद्वयं शुश्राव—**

'अनेक संशयोच्छेदि[1] परोक्षार्थस्य दर्शकम् ।
सर्वस्य लोचनं शास्त्रं यस्य नास्त्यन्ध[2] एव सः ॥ ८ ॥
यौवनं धनसंपत्तिः प्रभुत्व मविवेकिता ।
एकैकमप्यनर्थाय किमु यत्र चतुष्टयम् ॥ ९ ॥

**इत्याऽऽकर्ण्य, उद्विग्नमनाः[3] स राजा चिन्तयामास—**

कोऽर्थः पुत्रेण जातेन यो न विद्वान्न धार्मिकः ।
काणेन चक्षुषा किं वा चक्षुः—पीडैव केवलम् ॥ १० ॥
अजातमृतमूर्खाणां वरमाद्यौ न चान्तिमः ।
सकृद्दुःखकराऽऽवाद्यावन्तिमस्तु पदे पदे ॥ ११ ॥

**किं च—**

स जातो येन जातेन याति वंशः समुन्नतिम् ।
परिवर्त्तिनि संसारे मृतः को वा न जायते ॥ १२ ॥

---

१. षष्ठी तत्पुरुषः ।
२. इकोयणचि—इतियण् । ६ । १ । ७७ ।
३. उद्विग्नं मनोयस्य स उद्विग्नमनाः । बहु ब्रीहि समासः ।
४. द्वन्द्वः ।

गणः । कठिनी । सुसंभ्रमाद्ध । तमः ।

---

गुणिगणगणनाऽऽरम्भे न पतति कठिनी सुसंभ्रमाद्यस्य ।
तेनाम्बा यदि सुतिनी वद वन्ध्या कीदृशी नाम ॥ १३ ॥

**अपरं च—**

वरमेको गुणी पुत्रो न च मूर्खशतान्यऽपि ।
एकश्चन्द्रस्तमो हन्ति न च तारागणोऽपि च ॥ १४ ॥

**तत्कथमिदानीमेते मम पुत्रा गुणवन्तः क्रियन्ताम् ?**

आहारनिद्राभयमैथुनं च,
सामान्यमेतत्पशुभिर्नराणाम् ।
धर्मो हि तेषामधिको विशेषो-
धर्मेण हीनाः पशुभिः समानाः ॥ १५ ॥

**यतः—**

धर्मार्थकाममोक्षाणां यस्यैकोऽपि न विद्यते ।
अजागलस्तनस्येव तस्य जन्म निरर्थकम् ॥ १६ ॥

**तदद्य कश्चिदुद्योगः कर्तव्यः । यतः—**

उद्योगिनं पुरुषसिंहमुपैति लक्ष्मी-
दैवेन देयमिति कापुरुषा वदन्ति ।

---

१. गुणा वीरत्वादयो येषांसन्तीति तेगुणिनस्तेषां गणः-समूहस्तस्यगणनं संख्यानं तदारम्भे ।
२. द्वन्द्वः ।
३. षष्ठी तत्पुरुषः ।
४. कुत्सिताः पुरुषाः कापुरुषाः—विभाषापुरुषे-इतिकोः कादेशः । ६ । ३ । १०६ ।

निहत्य । मारकतीं । प्रवीणताम् । संभूताः ।
ग्राहयितुम् । अद्रव्यनिहिता ।

दैवं निहत्[1]य कुरु पौरुषमाऽऽत्मशक्त्या
यत्ने कृते यदि न सिध्यति कोऽत्र दोषः ॥ १७ ॥

एतच्चिन्[2]तयित्वा, स राजा पण्डितसभां कारितवान् । राजोवाच—'भो भोः पण्डिताः, श्रूयताम् । अस्ति कश्चिदेवंभूतो-विद्वान्, यो मम पुत्राणां नित्यमुन्मार्गगामिनाम्, अनधिगत-शास्त्राणाम् इदानीं नीतिशास्त्रोपदेशेन पुनर्जन्म कारयितुं समर्थः । यतः—

काचः काञ्चनसंसर्गाद्धत्ते मारकतीं द्युतिम् ।
तथा सत्संनिधानेन मूर्खो याति प्रवीणताम् ॥ १८ ॥

उक्तं च—

हीयते हि मतिस्तात हीनैः[3] सह समागमात् ।
समैश्च समतामेति विशिष्टैश्च विशिष्टताम् ॥ १९ ॥

अत्राऽन्तरे विष्णुशर्मनामा महापण्डितः सकलनीतिशास्त्र-तत्त्वज्ञो बृहस्पतिरिव अब्रवीत्—देव, महाकुलसंभूता एते राज-पुत्राः । तन्[4]मयानीतिं ग्राहयितुं शक्यन्ते । यतः—

नाद्रव्यनिहिता काचित् क्रिया फलवती भवेत् ।
न व्यापारशतेनाऽपि शुकवत्पाठ्यते बकः ॥ २० ॥

---

१. निहन्- क्त्वा-ल्यप्-तुक्च ।
२. स्तोश्चुना श्चुः-इति चुत्वम् । ८ । ४ । ४० ।
३. सहयोगे तृतीया ।
४. यरोऽनुनासिकेऽनुनासिको वा । इत्यनुनासिकः । ८ । ४ । ४५ ।

आकरे । अभिज्ञान् । अपेयाः । भवन्तः प्रमाणम् ।

---

अन्यच्च—

अस्मिंस्तु[1] निर्गुणं गोत्रे नाऽपत्यमुपजायते ।
आकरे पद्मरागाणां जन्म काचमणेः कुतः ॥ २१ ॥

अतोऽहं षण्मासाऽभ्यन्तरे तव पुत्रान् नीतिशास्त्राऽभिज्ञान् करिष्यामि । राजा सविनयं पुनरुवाच—

यथोदयगिरेर्द्रव्यं संनिकर्षेण दीप्यते
तथा सत्संनिधानेन हीनवर्णोऽपि दीप्यते ॥ २२ ॥

गुणा गुणज्ञेषु गुणा भवन्ति
ते निर्गुणं प्राप्य भवन्ति दोषाः ।
आस्वाद्यतोयाः प्रवहन्ति नद्यः
समुद्रमासाद्य भवन्त्यपेयाः ॥ २३ ॥

तदेतेषामस्मत्पुत्राणां नीतिशास्त्रोपदेशाय भवन्तः प्रमाणम्—इत्युक्त्वा तस्य विष्णुशर्मणो बहुमानपुरस्सरं पुत्रान् समर्पितवान् ।

## इति प्रस्ताविका

---

१. अस्मिन्- तु, नश्छव्यप्रशानितिरुत्वम् । ८ । ३ । ७ ।
२. सन्धिविभागः कारयितव्यः ।

## मित्रलाभः ।

प्रासादः । विनोदेन । असाधनाः । कूर्मः ।
आखुः । अनभिमतम् ।

---

अथ प्रासादपृष्ठे सुखोपविष्टानां राजपुत्राणां पुरस्तात् प्रस्तावक्रमेण स पण्डितोऽब्रवीत्—

'काव्यशास्त्रविनोदेन कालो गच्छति धीमताम् ।
व्यसनेन च मूर्खाणां निद्रया कलहेन वा ॥ १ ॥

तद्भवतां विनोदाय काककूर्मादीनां[1] विचित्रां कथां कथयामि । राजपुत्रैरुक्तम्—आर्य, कथ्यताम् । विष्णुशर्मोवाच—शृणुत । सम्प्रति मित्रलाभः प्रस्तूयते, यस्याऽयमाऽऽद्यः श्लोकः—

असाधना वित्तहीना बुद्धिमन्तः सुहृत्तमाः ।
साधयन्त्याऽऽशु कार्याणि काककूर्ममृगाऽऽखुवत्[2] ॥ २ ॥

राजपुत्रा ऊचुः—कथमेतत् । विष्णुशर्मा कथयति—

अस्ति गोदावरीतीरे विशालः शाल्मलीतरुः । तत्र नानादिग्देशादागत्य रात्रौ पक्षिणो निवसन्ति । अथ कदाचिदवसन्नायां रात्रौ, अस्तंगते भगवति चन्द्रमसि, लघुपतनकनामा वायसः प्रबुद्धः, आयान्तं कंचिद् व्याधमपश्यत् । स तमवलोक्याऽचिन्तयत्—अद्य प्रातरेवाऽनिष्टदर्शनं जातम् । न जाने

---

१. काकश्च कूर्मश्चकाककूर्मौ तावादिर्येषांते काककूर्मादयस्तेषाम् ।
२. द्वन्द्वे, तेनतुल्यं क्रिया चेद्वतिः—इतिवत् प्रत्ययः । ५ । १ । ११५ ।

प्रच्छन्नोभूत्वा । वियति । निर्जने । पंके ।

---

किमनभिमतं दर्शयिष्यति । इत्युक्त्वा तदनुसरणक्रमेण व्याकुलश्चलितः । यतः—

शोकस्थानसहस्राणि भयस्थानशतानि च ।
दिवसे दिवसे मूढमाऽऽविशन्ति न पण्डितम् ॥ ३ ॥

अन्यच्च, विषयिणामिदमवश्यं कर्तव्यम् ।

उत्थायोत्थाय बोद्धव्यं महद्भयमुपस्थितम् ।
मरणव्याधिशोकानां किमद्य निपतिष्यति ॥ ४ ॥

अथ तेन व्याधेन तण्डुलकणान्विकीर्य, जालं विस्तीर्णम् । स[1] च प्रच्छन्नो भूत्वा स्थितः । तस्मिन्[2]नेव काले चित्रग्रीवनामा कपोतराजः सपरिवारो, वियति विसर्पन् तान् तण्डुलकणान् अवलोकयामास । ततः कपोतराजः, तण्डुलकणलुब्धान्, कपोतान् प्रत्याह—कुतोऽत्र निर्जने वने तण्डुलकणानां संभवः । तन्निरूप्यतां तावत् । भद्रमिदं न पश्यामि । प्रायेणाऽनेन तण्डुलकण लोभेन अस्माभिरपि तथा भवितव्यं—

कंकणस्य तु लोभेन मग्नः पंके सुदुस्तरे ।
वृद्धव्याघ्रेण संप्राप्तः पथिकः स मृतो यथा ॥ ५ ॥

कपोता ऊचुः—कथमेतत् । सोऽब्रवीत्—

---

१. एतत्तदोः सुलोपोऽकोरनञ् समासेहलि-इति सुलोपः । ६ । १ । १३२ ।
२. ङमोह्रस्वादचि ङमुण्नित्यम्-इतिनुट् । ८ । ३ । ३२ ।

अनारुह्य । मारात्मके । गलितम् ।

---

## कथा १

अहमेकदा दक्षिणारण्ये चरन्न पश्यम् । एको वृद्धव्याघ्रः स्नातः कुशहस्तः सरस्तीरे ब्रूते—'भो भोः पान्थाः, इदं सुवर्णकंकणं गृह्यताम् । ततो लोभाऽऽकृष्टेन केनचित्पान्थेनाऽऽलोचितम् । भाग्येनैतत्सम्भवति । किंत्वस्मिन्नात्मसंदेहे प्रवृत्तिर्न विधेया । यतः—

अनिष्टादिष्टलाभेऽपि न गतिर्जायते शुभा ।
यत्राऽऽस्ते विषसंसर्गोऽमृतं तदपि मृत्यवे ॥ ६ ॥

किन्तु सर्वत्र अर्थाऽर्जने प्रवृत्तिः संदेह एव । तथा चोक्तम्—

न संशयमनारुह्य नरो भद्राणि पश्यति ।
संशयं पुनराऽऽरुह्य यदि जीवति पश्यति ॥ ७ ॥

तन्निरूपयामि तावत् । प्रकाशं ब्रूते—कुत्र तव कंकणम् । व्याघ्रो हस्तं प्रसार्य दर्शयति । पान्थोऽवदत्— कथं मारात्मके त्वयि विश्वासः । व्याघ्र उवाच—शृणुरे पान्थ, प्रागेव यौवनदशायामतिदुर्वृत्त आसम् । अनेकगोमानुषाणां वधान्मेपुत्रा मृता दाराश्च । वंशहीनश्चाऽहम् । ततः केनचिद्धार्मिकेणाहमादिष्टः—

दानधर्मादिकं चरतु भवान् । तदुपदेशादिदानीमहं स्नानशीलो दाता वृद्धो गलितनखदन्तो कथं न विश्वासभूमिः । मम

---

१. कर्मणि प्रत्ययः ।

दुर्निवारः । नीरुजस्य । प्रतीतः । धृतः ।

---

चैतावांल्लोभविरहो येन स्वहस्तस्थमपि सुवर्णकंकणं यस्मै कस्मै-चिद्दातुमिच्छामि । तथापि व्याघ्रो मानुषं खादतीति लोकप्रवादो-दुर्निवारः । मया च धर्मशास्त्राण्यधीतानि । शृणु—

मरुस्थल्यां यथा वृष्टिः क्षुधार्ते भोजनं तथा ।
दरिद्रे दीयते दानं सफलं पाण्डुनन्दन ॥ ८ ॥

त्वं चाऽतीव दुर्गतस्तेन तत्तुभ्यं[1] दातुं सयत्नोऽहम् । तथा चोक्तम्—

दरिन्द्रान्भर कौन्तेय मा प्रयच्छेश्वरे धनम् ।
व्याधितस्यौषधं पथ्यं नीरुजस्य[2] किमौषधैः ॥ ९ ॥

अन्यच्च—

दातव्यमिति यद्दानं दीयते ऽनुपकारिणे ।
देशे काले च पात्रे च तद्दानं सात्विकं विदुः ॥ १० ॥

तदत्र सरसि स्नात्वा सुवर्णकंकणं गृहाण । ततो यावदसौ तद्वचः-प्रतीतो लोभात्सरः स्नातुं प्रविशति-तावन्महापंके निमग्नः पलायितुमक्षमः । तं पंके पतितं दृष्ट्वा व्याघ्रोऽवदत्—'अहह, महापंके पतितोऽसि । अतः त्वामहमुत्थापयामि, । इत्युक्त्वा शनैः शनैरुपगम्य तेन व्याघ्रेण धृतः स पान्थोऽचिन्तयत्—

---

१. कर्मणायमभिप्रैति स सम्प्रदानम् । १ ४ । ३२ । । इति संप्रदान संज्ञायां, चतुर्थी संप्रदाने २ । २ । १३ । इति चतुर्थी ।

२. रोरि । ८ । ३ । १४ । इति रेफस्यलोपे; ढ्रलोपे पूर्वस्यदीर्घोऽणः । ६ । ३ । १११ । इति पूर्वस्याणो दीर्घः ।

अतिरिच्यते । प्रकृत्या । सुजीर्णम् ।

---

'न धर्मशास्त्रं पठतीति कारणं
न चाऽपि वेदाध्ययनं दुरात्मनः ।
स्वभाव एवाऽत्र तथाऽतिरिच्यते
यथा प्रकृत्या मधुरं गवां पयः ॥ ११ ॥

तन्मया भद्रं न कृतं यदत्र मारात्मके विश्वासः कृतः । इति चिन्तयन्नेवाऽसौ व्यापादितः खादितश्च । अतोहं ब्रवीमि- 'कंकणस्य तु लोभेन' इत्यादि । अतः सर्वथाऽविचारितं कर्म न कर्तव्यम् । यतः—

सुजीर्णमन्नं, सुविचक्षणः सुतः,
सुशासिता स्त्री, नृपतिः सुसेवितः ।
सुचिन्त्य चोक्तं, सुविचार्य यत्कृतं,
सुदीर्घकालेऽपि न याति विक्रियाम् , ॥ १२ ॥

तद्वचनं श्रुत्वा कश्चित्कपोतः सदर्पमाह—'आः, किमेवमुच्यते ।

वृद्धानां वचनं ग्राह्यमापत्काले ह्युपस्थिते ।
सर्वत्रैवं विचारेण भोजनेऽप्यप्रवर्तनम् ॥ १३ ॥

यतः—

शंकाभिः सर्वमाक्रांत मन्नं पानं च भूतले ।
प्रवृत्तिः कुत्र कर्तव्या जीवितव्यं कथं नु वा ॥ १४ ॥

एतच्छ्रुत्वा सर्वे कपोतास्तत्रोपविष्टाः । यतः—

---

१.सन्धि विभागः कारयितव्यः ।

हेममृगस्य । धियः । मुखरः । स्तम्भीभवति ।
विस्मयः । प्रतीकारः । सदसि ।

---

असंभवं हेममृगस्य जन्म,
तथापि रामो लुलुभे मृगाय ।
प्रायः समापन्नविपत्तिकाले,
धियोऽपि पुंसां मलिना भवन्ति ॥ १५ ॥

अनन्तरं सर्वे जालेन बद्धा बभूवुः । ततो यस्य वचनात्तत्र अवलम्बिता स्तं सर्वे तिरस्कुर्वन्ति । यतः,

न गणस्याऽग्रतो गच्छेत्सिद्धे कार्ये समं फलम् ।
यदि कार्यविपत्तिः स्यान्मुखरस्तत्र हन्यते ॥ १६ ॥

तस्य तिरस्कारं कृत्वा चित्रग्रीव उवाच—'नाऽयमस्य दोषः यतः—

आपदामापतन्तीनां हितोऽप्यायाति हेतुताम् ।
मातृजंघा हि वत्सस्य स्तम्भीभवति बन्धने ॥ १७ ॥

अन्यच्च—

स बन्धु र्यो विपन्नानामापदुद्धरणक्षमः ।
न तु भीतपरित्राणवस्तूपालम्भपंडितः ॥ १८ ॥

विपत्काले विस्मय एव कापुरुषलक्षणम् । तदत्र धैर्यमवलम्ब्य प्रतीकारश्चिन्त्यताम् । यतः—

विपदि धैर्यमथाभ्युदये क्षमा
सदसि वाक्पटुता युधि विक्रमः ।

यशसि चाऽभिरुचिर्व्यसनं श्रुतौ
प्रकृतिसिद्धमिदं हि महात्मनाम् ॥ १९ ॥

सम्पदि यस्य न हर्षो, विपदि विषादो, रणे च धीरत्वम् ।
तं भुवनत्रयतिलकं जनयति जननी सुतं विरलम् ॥ २० ॥

इदानीमप्येवं क्रियताम् । सर्वैरेकचित्तीभूय, जालमादाय-उड्डीयताम् । यतः—

अल्पानामपि वस्तूनां संहतिः कार्यसाधिका ।
तृणैर्गुणत्वमापन्नैर्बध्यन्ते मत्तदन्तिनः ॥ २१ ॥

इतिविचिन्त्य, पक्षिणः सर्वे, जालमादायोत्पतिताः । अनन्तरं स व्याधः सुदूराज्जालापहारकांस्तानवलोक्य पश्चाद्धावन्नचिन्तयत्—

संहतास्तु हरन्त्येते मम जालं विहंगमाः ।
यदा तु निपतिष्यन्ति वशमेष्यन्ति मे तदा ॥ २२

ततस्तेषु चक्षुर्विषयाऽतिक्रान्तेषु पक्षिषु स व्याधो निवृत्तः ।
अथ लुब्धकं निवृत्तं दृष्ट्वा कपोता[1] ऊचुः— किमिदानीं कर्तुमुचितम् । चित्रग्रीव[2] उवाच—

१. नश्छव्य प्रशान् । ८ । ३ । ७ । इतिरुत्वम् ।
२. भोभगोअघो अपूर्वस्ययोऽशि । ८ । ३ । १७ । इतियादेशेलोपः ।

गण्डकी । विवरः । अपायः । अत्रपातः ।
प्रत्यभिज्ञाय । ससंभ्रमम् ।

---

माता मित्रं पिता चेति स्वभावात्त्रितयं हितम् ।
कार्यकारणतश्चान्ये भवन्ति हितबुद्धयः ॥ २३ ॥

तदस्माकं मित्रं, हिरण्यको नाम मूषकराजो, गण्डकीतीरे एकस्मिन् वने वसति । सोऽस्माकं पाशांश्छेत्स्यति[1] । इत्यालोच्य सर्वे हिरण्यक विवरसमीपं गताः । हिरण्यकश्च, सर्वदापायशंकया शतद्वारं विवरं कृत्वा, निवसति । ततो हिरण्यकः कपोताऽत्र-पातभयाच्चकितस्तूष्णीं स्थितः । चित्रग्रीव उवाच— सखे हिरण्यक ! किमस्मान्न संभाषसे ? ततो हिरण्यकस्तद्वचनं प्रत्य-भिज्ञाय, ससंभ्रमं बहिर्निः सृत्याब्रवीत्—'आः, पुण्यवानस्मि । प्रियसुहृन्मे चित्रग्रीवः समायातः ।

यस्य मित्रेण संभाषा यस्य मित्रेण संस्थितिः ।
यस्य मित्रेण संलापस्ततो नास्तीह पुण्यवान्' ॥ २४ ॥

पाशबद्धांश्चैतान्[2]दृष्ट्वा सविस्मयः क्षणं स्थित्वोवाच—'सखे, किमेतत् ।' चित्रग्रीवोऽवदत्—'सखे, अस्माकं प्राक्तनजन्मकर्मणः[3] फलमेतत् ।

यस्माच्च येन च यथा च यदा च यच्च
याबच्च यत्र च शुभाशुभमात्मकर्म ।

---

१. पाशान् छेत्स्यतीति पूर्ववद्रत्वम् ।
२. सन्धे-र्विभागः कार्यः
३. तत्पुरुषः ।

तस्माच्च तेन च तया च तदा च तच्च
तावच्च तत्र च विधातृवशादुपैति ॥ २५ ॥

एतच्छ्रुत्वा हिरण्यकश्चित्रग्रीवस्य बन्धनं छेत्तुं, सत्वरमुपसर्पति । चित्रग्रीव उवाच—'मित्र, मा मैवम् । अस्मदाश्रितानामेषां तावत्पाशांश्छिन्धि, तदा मम पाशं पश्चाच्छेत्स्यसि ।' हिरण्यकोऽप्याह—'अहमल्पशक्तिः । दन्ताश्च मे कोमलाः । तदेतेषां पाशांश्छेत्तुं कथं समर्थः । तद्यावन्मे दन्ता न त्रुट्यन्ति तावत्तव पाशं छिनद्मि । तदनन्तरमेषामपि बन्धनं यावच्छक्यं छेत्स्यामि । चित्रग्रीव उवाच—'अस्त्वेवम् । तथापि यथाशक्त्या एतेषां बन्धनं खण्डय ।' हिरण्यकेनोक्तम्—'आत्मपरित्यागेन यदाश्रितानां परिरक्षणं तन्न नीतिविदां संमतम् । यतः—

आपदर्थे धनं रक्षेद्दारान्रक्षेद्धनैरपि ।
आत्मानं सततं रक्षेद्दारैरपि धनैरपि ॥ २६ ॥

चित्रग्रीव उवाच—'सखे, नीतिस्तावदीदृश्येव । किन्त्वहमस्मदाश्रितानां दुःखं सोढुं, सर्वथा, असमर्थः । तेनेदं ब्रवीमि । यतः—

धनानि जीवितं चैव परार्थे प्राज्ञ उत्सृजेत् ।
सन्निमित्ते वरं त्यागो विनाशे नियते सति ॥ २७ ॥

---

१. स्तोश्चुनाश्चुः । ८ । ४ । ४० । इतिचुत्वम् ।
२. शश्छोऽटि । ८ । ४ । ६३ । इतिछः ।

पुलकितः । अवज्ञा । आमिषम् । खगः । प्रबोध्य ।

---

इत्याकर्ण्य, हिरण्यकः प्रहृष्टमनाः पुलकितः सन्नब्रवीत्—'साधु मित्र साधु । अनेनाश्रितवात्सल्येन, त्रैलोक्यस्यापि प्रभुत्वं, त्वयि युज्यते' । एवमुक्त्वा-तेन सर्वेषां बन्धनानि छिन्नानि । ततो हिरण्यकः सर्वान्सादरं संपूज्याह—'सखे चित्रग्रीव, सर्वथात्र जालबन्धनविधौ, दोषमाशंक्य आत्मनि अवज्ञा न कर्तव्या । यतः—

> योऽधिकाद्योजनशतात्पश्यतीहामिषं खगः ।
> स एव प्राप्तकालस्तु पाशबन्धं न पश्यति ॥ २८ ॥

इति प्रबोध्य, आतिथ्यंकृत्वाऽऽलिंग्य च, चित्रग्रीवस्तेन संप्रेषितो, यथेष्टदेशान्सपरिवारो ययौ । हिरण्यकोऽपि स्वविवरं प्रविष्टः ।

> यानि कानि च मित्राणि कर्तव्यानि शतानि च ।
> पश्य मूषिकमित्रेण कपोता मुक्तबन्धनाः ॥ २९ ॥

अथ लघुपतनकनामा काकः, सर्ववृत्तान्तदर्शी, साश्चर्यमिदमाह—'अहो हिरण्यक, श्लाघ्योऽसि । अतोऽहमपि, त्वया सह, मैत्रीमिच्छामि । अतो मां मैत्र्येणानुग्रहीतुमर्हसि ।' एतच्छ्रुत्वा[4]

---

१. ङमोह्रस्वादचिङमुण् नित्यम् ८ । ३ । ३२ । इतिङुट् ।

२. पदच्छेदः कारयितव्यः ।

३. बहुब्रीहिः ।

४. शश्छोऽटि । ८ । ४ । ६३ । इति शस्यछः ।

अरण्यानी । सुललितम् । उपसृत्य ।

---

हिरण्यकोऽपि, विवराभ्यंतरादाह—'कस्त्वम् ।' स ब्रूते—'लघुपतनकनामा वायसोऽहम्[1] ।' हिरण्यको विहस्याह—'का त्वया सह मैत्री । यतः—

यद्येन युज्यते लोके बुधस्तत्तेन योजयेत् ।
अहमन्नं भवान्भोक्ता कथं प्रीतिर्भविष्यति ॥ ३० ॥

अपरं च ।

भक्ष्यभक्षकयोः[2] प्रीतिर्विपत्तेरेव कारणम् ।
शृगालात्पाशबद्धोऽसौ[1] मृगः काकेन रक्षितः ॥ ३१ ॥

वायसोऽब्रवीत्—'कथमेतत् ।' हिरण्यकः कथयति—

कथा २ ।

अस्ति मगधदेशे चम्पकवतीनाम अरण्यानी । तस्यां चिरान्[3]महता स्नेहेन, मृगकाकौ[4], निवसतः । स च मृगः, स्वेच्छया भ्राम्यन्हृष्टपुष्टांगः[5], केनचिच्छृगालेनावलोकितः । तं दृष्ट्वा शृगालोऽचिन्तयत्—'आः, कथमेतन्मांसं सुललितं, भक्षयामि । भवतु । विश्वासं तावदुत्पादयामि ।' इत्यालोच्य[6], उपसृत्याब्रवीत् । 'मित्र, कुशलं ते ।' मृगेणोक्तम्—'कस्त्वम् ।' स ब्रूते—

---

१. अतोरोरप्लुतादप्लुते । ६ । १ । ११३ । इति रोरुः ।

२ द्वन्द्वः ।

३. यरोऽनुनासिकेऽनुनासिकोवा । ८ । ४ । ४५ । इत्यनुनासिकः ।

४. द्वन्द्वः ।

५. द्वन्द्वगर्भित बहुव्रीहिः ।

६. क्त्वा-ल्यप्च ।

जीवलोकम् । मरीचिमालिनि । पर्कटीवृक्षः ।
कोटरे । दुर्विपाकात् ।

---

'क्षुद्रबुद्धिनामा जम्बुकोऽहम् । अत्राऽरण्ये बन्धुहीनो मृतवन्निवसामि । इदानीं त्वां मित्रमासाद्य पुनः सबन्धुर्जीवलोकं प्रविष्टोऽस्मि । अधुना तवाऽनुचरेण मया, सर्वथा भवितव्यम् । मृगेणोक्तम्—'एवमस्तु । ततः पश्चादस्तंगते सवितरि भगवति मरीचिमालिनि, तौ मृगस्य वासभूमिं गतौ । तत्र चम्पकवृक्षशाखायां, सुबुद्धिनामा काको, मृगस्य चिरमित्रं निवसति । तौ दृष्ट्वा काकोऽवदत्—'सखे[2] चित्रांग, कोऽयं द्वितीयः' । मृगो ब्रूते—'जम्बुकोऽयम् । अस्मत्सख्यमिच्छन्नागतः' । काको ब्रूते—'मित्र, अकस्मादागन्तुना सह मैत्री न युक्ता । तथा चोक्तम्—

'अज्ञातकुलशीलस्य वासो देयो न कस्यचित् ।
मार्जारस्य हि दोषेण हतो गृध्रो जरद्गवः' ॥ ३२ ॥

तावाऽऽहतुः—'कथमेतत्' । काकः कथयति—

## कथा ३ ।

अस्ति भागीरथीतीरे, महान्पर्कटीवृक्षः । तस्य कोटरे, दैवदुर्विपाकाद्गलितनखनयनो[3], जरद्गवनामा गृध्रः, प्रतिवसति । अथ कृपया, तज्जीवनाय, तद्वृक्षवासिनः पक्षिणः, स्वाहारात्किंचि-

---

१. तत्पुरुषः ।
२. सम्बोधनम् ।
३. बहुव्रीहिः ।

शावकान् । संनिधाने । अपसर । बध्यः । चान्द्रायणव्रतम् ।

---

त्किंचिदुद्धृत्य ददाति । तेनासौ जीवति । अथ कदाचिद्द्दीर्घकर्ण-नामा मार्जारः पक्षिशावकान्भक्षितुं तत्रागतः । ततस्तमायान्तं दृष्ट्वा, पक्षिशावकैर्भयार्तैः, कोलाहलः कृतः । तच्छ्रुत्वा, जरद्गवेनोक्तम्—'कोऽयमायाति' । दीर्घकर्णो गृध्रमवलोक्य, सभयमाह—

'हा, हतोऽस्मि । यतः—

तावद्भयस्य भेतव्यं यावद्भयमनागतम् ।
आगतं तु भयं वीक्ष्य नरः कुर्याद्यथोचितम् ॥ ३३ ॥

अधुनाऽस्य संनिधाने, पलायितुमक्षमः । तद्यथा भवितव्यं तद्भवतु । तावद्विश्वासमुत्पाद्य, अस्यसमीपं गच्छामि । इत्यालोच्योपसृत्याऽब्रवीत्— 'आर्य, त्वामभिवन्दे' । गृध्रोऽवदत्—'कस्त्वम्' । सोऽवदत् । 'मार्जारोऽहम्' । गृध्रो ब्रूते—'दूरमपसर । नो चेद्धन्तव्योऽसि[2] मया' । मार्जारोऽवदत्—श्रूयतां तावदस्मद्वचनम् । ततो यद्यहं बध्यस्तदा हन्तव्यः । यतः—

जातिमात्रेण किं कश्चिद्धन्यते पूज्यते क्वचित् ।
व्यवहारं परिज्ञाय बध्यः पूज्योऽथवा भवेत् ॥ ३४ ॥

गृध्रो ब्रूते—'ब्रूहि । किमर्थमागतोऽसि '। सोऽवदत्—'अहमत्र गंगातीरे, नित्यस्नायी ब्रह्मचारी चान्द्रायणव्रतमाचरं-

---

१. लटि वहुवचनम् ।
२. झयो होऽन्य तरस्याम् । ८ । ४ । ६२ । इति पूर्व सवर्णः ।

विश्वासभूमयः । प्रस्तुवन्ति । वयः । अरौ । द्रुमः । सूनृता ।
अध्यवसितम् । विवदमानानाम् । ऐकमत्यम् ।

---

स्तिष्ठामि । यूयं धर्मज्ञानरता विश्वासभूमय इति, पक्षिणः सर्वे सर्वदा, ममाग्रे प्रस्तुवन्ति । अतो भवद्भ्यो विद्यावयोवृद्धेभ्यो[1] धर्मं श्रोतुमिहागतः । भवंतश्चैतादृशा[2] धर्मज्ञा, यन्मामतिथिं हन्तुमुद्यताः । गृहस्थधर्मश्चैषः ।

> अरावप्युचितं कार्यमातिथ्यं गृहमागते ।
> छेत्तुः पार्श्वगतां छायां नोपसंहरते द्रुमः ॥ ३५ ॥

यदि वा धनं नास्ति, तदा प्रीतिवचसाप्यतिथिः पूज्य एव । यतः—

> तृणानि भूमिरुदकं वाक्चतुर्थी च सूनृता ।
> एतान्यपि सतां गेहे नोच्छिद्यन्ते कदाचन' ॥ ३६ ॥

गृध्रोऽवदत्—'मार्जारो हि मांसरुचिः । पक्षिशावकाश्चाऽत्र निवसन्ति । तेनाऽहमेवं ब्रवीमि' । तच्छ्रुत्वा मार्जारो, भूमिं स्पृष्ट्वा, कर्णौ स्पृशति । ब्रूते च—'मया धर्मशास्त्रं श्रुत्वा वीतरागेण, इदं दुष्करं व्रतं चान्द्रायणमध्यवसितम् । परस्परं विवदमानानामपि धर्मशास्त्राणाम् 'अहिंसा परमो धर्मः' इत्यत्रैकमत्यम् । यतः—

---

१. विद्या च वयश्च विद्यावयसी-ताभ्यां-वृद्धास्तेभ्यः ।

२. सन्धि विभागः कार्य्यः ।

स्वच्छन्दः । विलपद्भिः । जिज्ञासा ।
अस्थीनि । स्नेहानुवृत्तिः ।

---

सर्वहिंसानिवृत्ता ये नराः सर्वसहाश्च ये ।
सर्वस्याऽऽश्रयभूताश्च ते नराः स्वर्गगामिनः ॥ ३७ ॥
एक एवसुहृद्धर्मो निधनेऽप्यनुयाति यः ।
शरीरेण समं नाशं सर्व मन्यत्तु गच्छति ॥ ३८ ॥

शृणु पुनः—

स्वच्छन्दवनजातेन शाकेनाऽपि प्रपूर्यते ।
अस्य दग्धोदरस्याऽर्थे कः कुर्यात्पातकं महत् ॥ ३९ ॥

एवं विश्वास्य, स मार्जारस्तरुकोटरे स्थितः ।

ततो दिनेषु गच्छत्सु, पक्षिशावकानाक्रम्य, कोटरमानीय, प्रत्यहं खादति । येषामपत्यानि खादितानि, तैः शोकार्तैर्विलपद्भिरितस्ततो जिज्ञासा, समारब्धा । तत्परिज्ञाय, मार्जारः— कोटरान्निः सृत्य, बहिः पलायितः । पश्चात्पक्षिभिरितस्ततो निरूपयद्भिः तत्र तरुकोटरे, शावकास्थीनि प्राप्तानि । अनन्तरं ते ऊचुः—'अनेनैव जरद्गवेनास्माकं शावकाः खादिता इति सर्वैः पक्षिभिर्निश्चित्य, गृध्रो व्यापादितः । अतोऽहं ब्रवीमि—'अज्ञातकुलशीलस्य' इत्यादि ॥ इत्याकर्ण्य स जम्बुकः, सकोपमाह— 'मृगस्य प्रथमदर्शनदिने, भवानप्यज्ञातकुलशील एव । तत्कथं भवता सह एतस्य स्नेहानुवृत्तिरुत्तरोत्तरं वर्धते ।

---

१. ते ऊचुः— अयादेशे यलोपः ।

अल्पधीः । निरस्तपादपे । वसुधा । निभृतम् ।
सस्यपूर्णक्षेत्रम् । पाशः । उत्कृत्य मानस्य ।

---



यत्र विद्वज्जनो नास्ति श्लाघ्यस्तत्राल्पधीरपि ।
निरस्तपादपे देशे एरण्डोऽपि द्रुमायते ॥ ४० ॥

अन्यच्च —

अयं निजः परोवेति गणना लघुचेतसाम् ।
उदारचरितानां तु वसुधैव कुटुम्बकम् ॥ ४१ ॥

यथाऽयं मृगो मम बन्धुस्तथा भवानपि' । मृगोऽब्रवीत्— 'किमनेनोत्तरेण । सर्वैरेकत्र विश्रम्भाऽऽलापैः सुखिभिः— स्थीयताम् ।

काकेनोक्तम्—'एवमस्तु' । अथ प्रातः सर्वे यथाभिमतदेशं गताः ।

एकदा निभृतं शृगालो ब्रूते—सखे' अस्मिन्वनैकदेशे, सस्यपूर्णक्षेत्रमस्ति । तदहं त्वां नीत्वा दर्शयामि' । तथा कृते सति, मृगः प्रत्यहं तत्र गत्वा, सस्यं खादति । अथ क्षेत्रपतिना, तद्दृष्ट्वा, पाशो योजितः ।

अनन्तरं पुनरागतो मृगः पाशैर्बद्धोऽचिन्तयत्—'को मामितः कालपाशादिव व्याधपाशात्त्रातुं, मित्रादन्यः समर्थः । तत्रान्तरे जम्बुकस्तत्रागत्योपस्थितोऽचिन्तयत्— 'फलिता तावदस्माकं कपटप्रबन्धेन मनोरथसिद्धिः । एतस्योत्कृत्यमानस्य,

---

१. सस्यैः पूर्णं, सस्य पूर्णम्, सस्य पूर्णञ्च तत्क्षेत्र मिति ।

असृक् । उल्लासितः । त्रायस्व । स्नायुः । भट्टारकवारे । आच्छाद्य । प्रदोषकाले । अन्विष्य । अवधीरितम् । वञ्चकः ।

---

मांसाऽसृग्लिप्तान्यस्थीनि[1], मयाऽवश्यं प्राप्तव्यानि । तानि बाहुल्येन भोजनानि भविष्यन्ति' । मृगस्तं दृष्ट्वोल्लासितो ब्रूते—'सखे, छिन्धि तावन्मम बन्धनम् । सत्वरं त्रायस्व माम् ।
यतः—

आपत्सु मित्रं जानीयाद् युद्धे शूरमृणे शुचिम् ।
भार्यां क्षीणेषु वित्तेषु व्यसनेषु च बान्धवान् ॥ ४२ ॥

जम्बुको मुहुर्मुहुः पाशं विलोक्याचिन्तयत्—'दृढस्तावदयं बद्धः' । ब्रूते च—'सखे' स्नायुनिर्मिता एते पाशाः । तदद्य भट्टारकवारे कथमेतान्दन्तैः स्पृशामि । मित्र, यदि चित्ते नान्यथा मन्यसे, तदा प्रभाते यत्त्वया वक्तव्यं तत्कर्तव्यम्' । इत्युक्त्वा, तत्समीप आत्मानमाच्छाद्य, स्थितः सः । अनन्तरं स काकः, प्रदोषकाले, मृगमनागतमवलोक्य, इतस्ततोऽन्विष्य, तथाविधं दृष्ट्वोवाच— 'सखे किमेतत्' । मृगेणोक्तम्—'अवधीरित-सुहृद्वाक्यस्य फलमेतत् । तथा चोक्तम्—

सुहृदां हितकामानां यः शृणोति न भाषितम् ।
विपत्संनिहिता तस्य' स नरः शत्रुनन्दनः ॥ ४३ ॥

काको ब्रूते—'स वञ्चकः काऽऽस्ते' । मृगेणोक्तम्— मम मांसार्थी तिष्ठत्यत्रैव' । काकोब्रूते—'उक्तमेव मया पूर्वम् ।

---

१. मांसंच-असृक्च मांसासृजी ताभ्यां लिप्तानि ।

**नृशंसेभ्यः । मिथ्योपचारैः । अर्थिनाम् । विश्रब्धे । असत्यसन्धम् । मशकः ।**

---

अपराधो न मेऽस्तीति नैतद्विश्वासकारणम् ।
विद्यते हि नृशंसेभ्यो भयं गुणवतामपि ॥ ४४ ॥

**ततः काको, दीर्घनिःश्वस्य, ब्रूते, 'अरेवञ्चक, किं त्वया पापकर्मणाकृतम्[1]**

**यतः—**

संलापितानां मधुरैर्वचोभि-
मिथ्योपचारैश्च वशीकृतानाम् ।
आशावतां श्रद्दधतां च लोके
किमर्थिनां वञ्चयितव्यमस्ति ॥ ४५ ॥

उपकारिणि विश्रब्धे शुद्धमतौ यः समाचरति पापम् ।
तं जनमसत्यसन्धं भगवति वसुधे कथं वहसि ॥ ४६ ॥

**अथवा स्थितिरियं दुर्जनानाम् ।**

प्राक्पादयोः पतति खादति पृष्ठमांसं
कर्णे कलं किमपि रौति शनैर्विचित्रम् ।
छिद्रं निरूप्य सहसा प्रविशत्यशंकः
सर्वं खलस्य चरितं मशकः करोति ॥ ४७ ॥

दुर्जनः प्रियवादी च नैतद्विश्वासकारणम् ।
मधु तिष्ठति जिह्वाग्रे हृदि हालाहलं विषम् ॥ ४८ ॥

---

१. कर्मणि क्तः ।

वातेन । स्तब्धीकृत्य । क्षिप्तेन ।

अत्युत्कटैः । अनघ ।

---

अथ प्रभाते, क्षेत्रपतिर्लगुडहस्तस्तं प्रदेशमागच्छन्, काकेनावलोकितः । तमालोक्य काकेनोक्तम्— 'सखे मृग, त्वमात्मानं मृतवत्संदर्श्य, वातेनोदरं पूरयित्वा, पादान्स्तब्धीकृत्य तिष्ठ । यदाऽहं शब्दं करोमि, तदा त्वमुत्थाय सत्वरं पलायिष्यसे' । मृगस्तथैव काकवचनेन स्थितः । ततः क्षेत्रपतिना हर्षोत्फुल्ललोचनेन[1], तथाविधो मृग आलोकितः । 'आः स्वयं मृतोऽसि' इत्युक्त्वा मृगं बन्धनान्मोचयित्वा, पाशान्ग्रहीतुं, सयत्नो बभूव । ततः काकशब्दं श्रुत्वा मृगः, सत्वरमुत्थाय, पलायितः । तमुद्दिश्य तेन क्षेत्रपतिना क्षिप्तेन लगुडेन, शृगालो हतः । तथा चोक्तम्—

त्रिभिर्वर्षैस्त्रिभिर्मासैस्त्रिभिः पक्षैस्त्रिभिर्दिनैः ।
अत्युत्कटैः पापपुण्यैरिहैव फलमश्नुते ॥ ४९ ॥

अतोऽहं ब्रवीमि—'भक्ष्यभक्षकयोः प्रीतिः' इत्यादि ॥

काकः पुनराह—

'भक्षितेनाऽपि भवता नाऽऽहारो मम पुष्कलः ।
त्वयि जीवति जीवामि चित्रग्रीव इवानघ ॥ ५० ॥

अन्यच्च—

तिरश्चामपि विश्वासो दृष्टः पुण्यैककर्मणाम् ।
सतां हि साधुशीलत्वात्स्वभावो न निवर्तते ॥ ५१ ॥

---

१. हर्षेणोत्फुल्ले लोचने यस्य स हर्षोत्फुल्ललोचनस्तेन ।

प्रभवन्ति । सुश्लिष्टेन । पावकम् । नौः । व्यापादयिष्यामि । दाक्षिण्यम् ।

---

हिरण्यको ब्रूते—'चपलस्त्वम् । चपलेन सह स्नेहः सर्वथा न कर्तव्यः । तथा चोक्तम्—

मार्जारो महिषो मेषः काकः कापुरुषस्तथा ।
विश्वासात्प्रभवन्त्येते विश्वास स्तत्र नोचितः ॥ ५२ ॥

किं चान्यत् । शत्रुपक्षो भवानस्माकम् । उक्तं चैतत्—

शत्रुणा नहि संदध्यात् सुश्लिष्टनाऽपि संधिना ।
सुतप्तमपि पानीयं शमयत्येव पावकम् ॥ ५३ ॥

दुर्जनः परिहर्तव्यो विद्ययाऽलंकृतोऽपि सन् ।
मणिना भूषितः सर्पः किमसौ न भयंकरः ॥ ५४ ॥

यदशक्यं न तच्छक्यं यच्छक्यं शक्यमेव तत् ।
नोदके शकटं याति न च नौर्गच्छति स्थले ॥ ५५ ॥

लघुपतनको ब्रूते—'श्रुतं[2] मया सर्वम् । तथापि मम चैतावान्संकल्पस्त्वया सह सौहृद्यमवश्यं करणीयमिति । नो चेत् अनाहारेणाऽऽत्मानं व्यापादयिष्यामि । तथाहि—

शुचित्वं त्यागता शौर्यं सामान्यं सुखदुखयोः[3] ।
दाक्षिण्यं चाऽनुरक्तिश्च सत्यगिता च सुहृद्गुणाः ॥ ५६ ॥

---

१. संहिता प्रष्टव्या ।
२. कर्मणिक्तः—कर्तरि तु–अहं श्रुतवान् ।
३. सुखञ्च दुःखञ्च सुखदुःखे तयोः ।
४. सुहृदोगुणाः सुहृद्गुणाः ।

आप्यायितः । घर्मार्त्तम् । आकृष्टिमन्त्रोपमम् । याच्ञा ।

नैष्ठुर्यम् । अस्तब्धत्वम् ।

---

एतै गुणैरुपेतो भवदन्यो मया कः सुहृत्प्राप्तव्यः[1] । इत्यादि तद्वचनमाकर्ण्य हिरण्यको बहिर्निःसृत्याऽऽह— 'आप्यायितोऽहं भवताऽनेन वचनामृतेन । तथा चोक्तम्—

घर्मार्तं न तथा सुशीतलजलैः स्नानं, न मुक्तावली,
न श्रीखण्डविलेपनं, सुखयति प्रत्यंगमप्यर्पितम् ।
प्रीत्या सज्जनभाषितं प्रभवति प्रायो यथा चेतसः
सद्युक्त्या च पुरस्कृतं सुकृतिनामाकृष्टिमन्त्रोपमम् ॥ ५७ ॥

अन्यच्च—

रहस्यभेदो याच्ञा[2] च नैष्ठुर्यं चलचित्तता ।
क्रोधो निःसत्यता द्यूत मेतन्मित्रस्य दूषणम् ॥ ५८ ॥

अनेन वचनक्रमेण तदेकदूषणमपि त्वयि[3] न लक्ष्यते ।

यतः—

पटुत्वं सत्यवादित्वं कथायोगेन बुध्यते ।
अस्तब्धत्वमचापल्यं प्रत्यक्षेणाऽवगम्यते ॥ ५९ ॥

---

१. प्रपूर्वात् आप्धातोः, कर्मणि तव्यप्रत्ययः ।

२. याच-धातोर्णजयाचयत विच्छ प्रच्छरक्षोनङ् । ३ । ३ । ९० । इति-नङ् ततश्चुत्वम् ।

३. युष्मदः सप्तम्या एक वचने ।

विवरम् । आयतनम् । संवर्धयिष्यति ।

---

तद्भवतु भवतोऽभिमतमेव' । इत्युक्त्वा हिरण्यको मैत्र्यं विधाय भोजनविशेषै र्वायसं संतोष्य विवरं प्रविष्टः । वायसोऽपि स्वस्थानं गतः । ततः प्रभृति तयोरन्योन्याऽऽहारप्रदानेन कुशलप्रश्नै र्विश्रम्भालापैश्च कालोऽतिवर्तते ।

एकदा लघुपतनको हिरण्यकमाह— 'सखे कष्टतरलभ्याहारम् इदं स्थानं परित्यज्य स्थानान्तरं गन्तुमिच्छामि' । हिरण्यकोऽब्रूते— 'मित्र, क्व गन्तव्यम् ।

तथा चोक्तम्—

चलत्येकेन पादेन तिष्ठत्येकेन बुद्धिमान् ।
मा समीक्ष्य परं स्थानं पूर्वमायतनं त्यजेत् ॥ ६० ॥

वायसो ब्रूते—'अस्ति सुनिरूपितंस्थानम्' । हिरण्यकोऽवदत्—'किं तत्' । वायसो ब्रूते— अस्ति दण्डकाऽरण्ये कर्पूरगौराऽभिधानं सरः । तत्र चिरकालोपार्जितः प्रियसुहृन्मे मन्थरकाऽभिधानः कच्छपो धार्मिकः प्रतिवसति ।

स च भोजनविशेषैर्मां संवर्धयिष्यति' । हिरण्यकोऽप्याह— 'तत्किमत्राऽवस्थाय मया कर्तव्यम्' ।

यतः—

यस्मिन्देशे न संमानो न वृत्तिर्न च बान्धवः ।
न च विद्याऽऽगमः कश्चित्तं देशं परिवर्जयेत् ॥ ६१ ॥

धुरीणः । रत्नाकरः । उपाख्यानम् । आवसथः ।
परिव्राट् । नागदन्तः ।

---

ततो मामपि तत्र नयं[1] । अथ वायसस्तत्र तेन मित्रेण सह विचित्राऽऽलापैः सुखेन तस्य सरसः[2] समीपं ययौ । ततो मन्थरो दूरादवलोक्य, लघुपतनकस्य यथोचितमाऽऽतिथ्यं विधाय मूषिकस्याऽतिथिसत्कारं चकार ।

वायसोऽवदत्—'सखे मन्थर, सविशेषपूजामस्मै विधेहि । यतोऽयं पुण्यकर्मणां धुरीणः कारुण्यरत्नाकरो हिरण्यकनामा मूषिकराजः । एतस्य गुणस्तुतिं जिह्वासहस्रद्वयेनाऽपि कश्चन न कदाचित्कथयितुं समर्थः स्यात् । इत्युक्त्वा चित्रग्रीवोपाख्यानं वर्णितवान् । मन्थरः सादरं हिरण्यं संपूज्याऽऽह— 'भद्र, आत्मनो निर्जनवनागमनकारणमाख्यातुमर्हसि' । हिरण्यकोऽवदत्—'कथयामि । श्रूयताम्—

## कथा ४ ।

अस्ति कान्यकुब्जाभिधानायां नगर्यां परिव्राजकावसथः । तत्र चूड़ाकर्णो नाम परिव्राट् प्रतिवसति । स च भोजनाऽवशिष्टभिक्षाऽन्नसहितं भिक्षापात्रं नागदन्तकेऽवस्थाप्य स्वपिति ।

---

१. णीञ्-धातोर्लोटि ।
२. षष्ठ्या एक वचने ।
३. सप्तम्या एकवचने ।

उत्प्लुत्य । जर्जरवंशखण्डेन । अपकारी ।
खनित्रम् । सत्वम् ।

---

अहं च तदन्नमुत्प्लुत्य प्रत्यहं भक्षयामि। अनन्तरं तस्य प्रिय-सुहृद्वीणाकर्णो नाम परिव्राजकः समायातः । तेन सह कथा प्रसंगाऽवस्थितो मम त्रासार्थं जर्जरवंशखण्डेन चूडाकर्णो भूमि-मताडयत् । वीणाकर्ण उवाच—सखे, किमिति मम कथा-विरक्तो भवान्' । चूडाकर्णेनोक्तम्—'मित्र, नाहं विरक्तः । किंतु पश्याऽयं मूषिको ममाऽपकारी सदा पात्रस्थं भिक्षाऽन्नम् उत्प्लुत्य भक्षयति । वीणाकर्णो नागदन्तकं विलोक्याऽऽह—'कथं मूषिकः स्वल्पबलोऽप्येतावद्दूरमुत्पतति, तदत्र केनाऽपि कारणेन भवितव्यम् । क्षणं विचिन्त्य, परिव्राजकेनोक्तम्—'कारणं चाऽत्र धनबाहुल्यमेव भविष्यति । यतः—

धनवान्बलवांल्लोके सर्वः सर्वत्र सर्वदा ।
प्रभुत्वं धनमूलं हि राज्ञामप्युपजायते ॥ ६२ ॥

ततः खनित्रमाऽऽदाय तेन विवरं खनित्वा चिरसंचितं मम धनं गृहीतम् । ततः प्रभृति निजशक्तिहीनः[1] सत्वोत्साहरहितः स्वाऽऽहारमप्युत्पादयितुमक्षमः सत्रासं मन्दं मन्दमुपसर्पंश्चूडा-कर्णेनाऽवलोकितः । ततस्तेनोक्तम्—

धनेन बलवांल्लोके धनाद्भवति पण्डितः ।
पश्यैनं मूषिकं पापं स्वजातिसमतां[2] गतम् ॥ ६३ ॥

---

१. निजाऽसौ शक्तिश्चेति निजशक्तिः तयाहीनः ।
२. स्वजातेः समता–स्वजातिसमता–ताम् ।

कुसरितः । सन्तापम् । अनलः । उपचारः ।
निर्वेदम् । आस्पदम् ।

---

किं च—

अर्थेन तु विहीनस्य पुरुषस्याऽल्पमेधसः[1] ।
क्रियाः सर्वा विनश्यन्ति ग्रीष्मे कुसरितो यथा ॥ ६४ ॥

एतत्सर्वमाकर्ण्य मयाऽऽलोचितम्— 'ममाऽत्रावस्थानम् अयुक्तमिदानीम् ।
यच्चाऽन्यस्मा[2] एतद्वृत्तान्तकथनं, तदप्यनुचितम् । यतः—

अर्थनाशं मनस्तापं गृहे दुश्चरितानि च ।
वञ्चनं चाऽपमानं च मतिमान् न प्रकाशयेत् ॥ ६५ ॥

यच्चाऽत्रैव याच्ञया जीवनं तदतीव गर्हितम् । यतः ।

वरं विभवहीनेन प्राणैः संतर्पितोऽनलः ।
नोपचारपरिभ्रष्टः कृपणः प्रार्थितो जनः ॥ ६६ ॥

दारिद्र्याद्ध्रियमेति, ह्रीपरिगतः सत्वात्परिभ्रश्यते,
निःसत्त्वः परिभूयते, परिभवान्निर्वेदमापद्यते ।
निर्विण्णः शुचमेति, शोकनिहतो बुद्ध्या परित्यज्यते,
निर्बुद्धिः क्षयमेत्यहो[4] निधनता सर्वाऽऽपदामाऽऽस्पदम् ॥ ६७ ॥

---

१. अल्पा मेधा यस्य सः—अल्पमेधाः—तस्य ।
२. आयादेशे—लोपः शाकल्यस्य । ८ । ३ । १९ । यलोपः । पूर्वत्रासिद्धम् । ८ । २ । १ । इत्यसिद्धत्वान्न सन्धिः ।
३. झयो होऽन्यतरस्याम् । ८ । ४ । ६२ । इति पूर्वसवर्णः ।
४. इण्-गतौ-लटि ।

परपिण्डेन । परिच्छेदः ।

इति विमृश्य 'तत्किमहं परपिण्डेनाऽऽत्मानं पोषयामि । कष्टं भोः । तदपि द्वितीयं मृत्युद्वारम् । यत —

रोगी चिरप्रवासी पराऽऽन्नभोजी पराऽऽवसथशायी ।
यज्जीवति तन्मरणं यन्मरणं सोऽस्य विश्रामः ॥ ६८ ॥

इत्याऽऽलोच्याऽपि लोभात्पुनरप्यर्थं ग्रहीतुं[1] ग्रहमकरवम्[2] । ततोऽहं तेन मन्दबुद्धिप्रेरितेन वीणाकर्णेन जर्जरवंशखण्डेन ताडितश्चाचिन्तयम् —

'धनलुब्धो ह्यसंतुष्टोऽनियतात्माऽजितेन्द्रियः ।
सर्वा एवाऽऽपदस्तस्य यस्य तुष्टं न मानसम् ॥ ६९ ॥

तथा च —

संतोषाऽमृततृप्तानां यत्सुखं शांतिचेतसाम् ।
कुतस्तद्धनलुब्धानामितश्चेतश्च धावताम् ॥ ७० ॥

तदत्राऽवस्थे चितकार्यपरिच्छेदः श्रेयान् ।

को धर्मो भूतदया, किं सौख्यमरोगिता जगति जन्तोः ।
कः स्नेहः सद्भावः, किं पांडित्यं परिच्छेदः ॥ ७१ ॥

तथा च —

परिच्छेदो हि पांडित्यं यदाऽऽपन्ना विपत्तयः ।
अपरिच्छेदकर्तॄणां विपदः स्युः पदे पदे ॥ ७२ ॥

१. सुप्यजातौ णिनिस्ताच्छील्ये । ३ । २ । ७८ । इति णिनिः ।
२. लङि-उत्तमैक वचने ।

जनपदः । निरायासम् । निर्वृतिः । परिधानम् ।

---

त्यजेदेकं कुलस्याऽर्थे ग्रामस्याऽर्थे कुलं त्यजेत् ।
ग्रामं जनपदस्याऽर्थे स्वाऽऽत्माऽर्थे पृथिवीं त्यजेत् ॥ ७३ ॥

अपरं च—

पानीयं वा निराऽऽयासं स्वाद्वन्नं वा भयोत्तरम् ।
विचार्य खलु पश्यामि तत्सुखं यत्र निर्वृतिः ॥ ७४ ॥

इत्याऽऽलोच्याऽहं निर्जनवनमागतः । यतः—

वरं वनं व्याघ्रगजेन्द्रसेवितं[1]
द्रुमाऽऽलयं पक्वफलाऽम्बुभोजनम् ।
तृणानि शय्या परिधानवल्कलं
न बंधुमध्ये धनहीनजीवनम् ॥ ७५ ॥

ततोऽस्मत्पुण्योदयादनेन मित्रेणाऽहं स्नेहाऽनुवृत्त्याऽनुगृहीतः । अधुना च पुण्यपरम्परया भवदाऽऽश्रयः स्वर्ग एव मया प्राप्तः । यतः—

संसारविषवृक्षस्य द्वे एव रसवत्फले ।
काव्याऽमृतरसाऽऽस्वादः, संगमः सुजनैः सह ॥ ७६ ॥

मन्थर उवाच—

---

१. व्याघ्रश्च गजेन्द्रश्च–व्याघ्रगजेन्द्रौ–ताभ्यां सेवितम् ।

**पादरजः । लोलः । फेनः । अर्गलः ।**
**परीवाहः । घोराकृतिः । घनः ।**

---

'अर्थाः पादरजोपमा, गिरिनदीवेगोपमं यौवनं,
आयुष्यं जललोलबिन्दुचपलं, फेनोपमं जीवितम् ।
धर्मं यो न करोति निंदितमतिः स्वर्गाऽर्गलोद्घाटनं
पश्चात्तापयुतो जरापरिगतः शोकाऽग्निना दह्यते ॥ ७७ ॥

**युष्माभिरतिसंचयः कृतः । तस्यायं दोषः । शृणु—**

उपाऽर्जितानां वित्तानां त्याग एव हि रक्षणम् ।
तडागोदरसंस्थानां परीवाह इवाऽम्भसाम् ॥ ७८

**उक्तं च—**

कर्तव्यः संचयो नित्यं कर्तव्यो नातिसंचयः ।
पश्य संचयशीलोऽसौ धनुषा जम्बुको हतः ॥ ७९ ॥

**तावाऽऽहतुः—'कथमेतत्' । मन्थरः कथयति—**

## कथा ५ ।

**आसीत्कल्याणकटकवास्तव्यो भैरवो नाम व्याधः । स चैकदा मृगमन्विष्यमाणो विन्ध्याटवीं गतवान् । ततस्तेन, व्यापादितं मृगमादाय गच्छता, घोराऽऽकृति[1]ः शूकरो दृष्टः । तेन व्याधेन मृगं भूमौ निधाय शूकरः शरेणाऽऽहतः[2] । शूकरेणाऽपि घनघोर-**

---

१. घोरा आकृतिर्यस्य सः-बहुब्रीहिः ।

२. कर्मणिक्तः । कर्तरिव्याधे करणे शरेच । कर्तृकरणयो स्तृतीया । २ । ३ । १८ । इतितृतीया । शूकरे कर्मणि प्रथमा ।

उरसि । गुणः । कोदण्डम् ।
विशिष्टेभ्यः । वित्तम् ।

---

गजर्नं कृत्वा स व्याध उरसि हतः संछिन्नद्रुम[1] इव भूमौ निपपात ।

अथ तयोः पादास्फालनेन एकः सर्पोऽपि मृतः । अथानन्तरं दीर्घरावो नाम जम्बुकः परिभ्रमन्नाऽऽहारार्थी तान्मृतान्मृगव्याधसर्पशूकरान[2]पश्यत् । अचिन्तयच्च— अहो अद्य महद्भोज्यं मे समुपस्थितम् ।

मासमेकं नरो याति, द्वौ मासौ मृगशूकरौ ।
अहिरेकं दिनं याति, अद्य भक्ष्यो धनुर्गुणः ॥ ८० ॥

ततः प्रथमबुभुक्षायामिदं निःस्वादुः कोदण्डलग्नं स्नायुबन्धनं खादामि । इत्युक्त्वा तथा कृते सति छिन्ने स्नायुबन्धन उत्पतितेन धनुषा हृदि निर्भिन्नः स दीर्घरावः पञ्चत्वं गतः । अतोऽहं ब्रवीमि— 'कर्तव्यः संचयो नित्यम्' इत्यादि ।

तथा च—

यद्ददासि विशिष्टेभ्यो यच्चाऽश्नासि दिने दिने ।
तत्ते वित्तमहं मन्ये शेषं कस्याऽपि रक्षसि ॥ ८१ ॥

यातु । किमिदानीमतिक्रान्तोपवर्णनेन । यतः—

---

१. छिन्नश्चासौ द्रुम इति छिन्नद्रुमः ।
२. द्वन्द्वः ।

**पयोधराः । स्वविषयः । लांगुलः ।**
**द्विपेन्द्रः । निपानम् । प्रणयाः ।**

---

नाऽप्राप्यमभिवाच्छन्ति नष्टं नेच्छन्ति शोचितुम् ।
आपत्स्वपि न मुह्यन्ति नराः पंडितबुद्धयः ॥ ८२ ॥

**तत्सखे, सर्वदा त्वया सोत्साहेन भवितव्यम् । एतस्मिंश्च दशाविशेषे शान्तिः करणीया । एतदप्यतिकष्टं न त्वया मन्तव्यम् । यतः—**

राजा कुलवधू विप्रा मंत्रिणश्च पयोधराः ।
स्थानभ्रष्टा न शोभन्ते दन्ताः केशा नखा नराः ॥ ८३ ॥

**इति विज्ञाय मतिमान्स्वस्थानं न परित्यजेत्—इति कापुरुषवचनमेतत् । यतः—**

स्थानमुत्सृज्य गच्छन्ति सिंहाः सत्पुरुषा गजाः ।
तत्रैव निधनं यांति काकाः कापुरुषा मृगाः ॥ ८४ ॥

को वीरस्य मनस्विनः स्वविषयः को वा विदेशस्तथा
यं देशं श्रयते तमेव कुरुते बाहुप्रतापाऽर्जितम् ।
यद्दंष्ट्रानखलांगुलप्रहरणः सिंहो वनं गाहते
तस्मिन्नेव हतद्विपेन्द्ररुधिरैस्तृष्णां छिनत्त्यात्मनः ॥ ८५ ॥

**अपरं च—**

निपानमिव मण्डूकाः सरः पूर्णमिवाण्डजाः ।
सोद्योगं नरमायान्ति विवशाः सर्वसम्पदः ॥ ८६ ॥

आमरणान्ताः प्रणयाः कोपास्तत्क्षणभंगुराः ।
परित्यागाश्च निःसंगा भवन्ति हि महात्मनाम् ॥ ८७ ॥

पंकमग्नानाम् । आरूढः । औरसम् । निर्विशेषम् ।

---

इति श्रुत्वा लघुपतनको ब्रूते—'धन्योऽसि मन्थर, सर्वथा श्लाघ्यगुणोऽसि । यतः—

सन्त एव सतां नित्यमापदुद्धरणक्षमाः ।
गजानां पंकमग्नानां गजा एव धुरंधराः ॥ ८८ ॥

तदेवं ते स्वेच्छाऽऽहारविहारं कुर्वाणाः संतुष्टाः सुखं निवसन्ति' ।

अथ कदाचिच्चित्रांगनामा मृगः केनापि त्रासितस्तत्राऽऽगत्य मिलितः । ततः पश्चादायान्तं मृगमवलोक्य भयं संचिन्त्य मन्थरो जलं प्रविष्टः । मूषिकश्च विवरं गतः । काकोऽप्युड्डीय वृक्षमारूढः । ततो लघुपतनकेन सुदूरं निरूप्य भयहेतु र्न कोऽप्याऽऽगतीत्याऽऽलोचितम् । पश्चात्तद्वचनादागत्य पुनः सर्वे मिलित्वा तत्रैवोपविष्टाः । मन्थरेणोक्तम्—भद्रम् । मृग, स्वागतम् । स्वेच्छयोदकाद्याहारोऽनुभूयताम् । अत्राऽवस्थानेन वनमिदं सनाथीक्रियताम्' । चित्राङ्गो ब्रूते—'लुब्धकत्रासितोऽहं भवतां शरणमागतः । भवद्भिः सह सख्यमिच्छामि' । हिरण्यकोऽवदत्—'मित्रत्वं तावदस्माभिः सह भवता यत्नेन मिलितम् । यतः—

औरसं कृतसंबन्धं तथा वंशक्रमागतम् ।
रक्षितं व्यसनेभ्यश्च मित्रं ज्ञेयं चतुर्विधम् ॥ ८९ ॥

तदत्र भवता स्वगृहनिर्विशेषं स्थीयताम् । तच्छ्रुत्वा मृगः सानन्दो भूत्वा स्वेच्छाहारं कृत्वा पानीयं पीत्वा—

आसन्नः । कटकः । किम्वदन्ती ।
साधयितव्यम् ।

---

जलासन्नतरुच्छायायामुपविष्टः । अथ मन्थरेणोक्तम्—'सखे मृग, एतस्मिन्निर्जने वने केन त्रासितोऽसि। कदाचित्किं व्याधाः संचरन्ति' । मृगेणोक्तम्—'अस्ति कलिंगविषये रुक्मांगदो नाम नरपतिः । स च दिग्विजयव्यापारक्रमेणाऽऽगत्य चंद्रभागानदी-तीरे समावासितकटको वर्त्तते। प्रातश्च तेनात्राऽऽगत्य कर्पूरसरः-समीपे भवितव्यमिति व्याधानां मुखात्किंवदन्ती श्रूयते । तन्मित्र कश्चिदुपायः करणीयो येनाऽस्माकं रक्षा स्यात् ।
तथा चोक्तम्—

> उपायेन हि यच्छक्यं न तच्छक्यं पराक्रमैः ।
> शृगालेन हतो हस्ती गच्छता पंक वर्त्मना ॥ ६० ॥

मंथरः पृच्छति-कथमेतत् । मृगः कथयति—

## कथा ६

अस्ति तपोवने कर्पूरतिलको नाम हस्ती । तमवलोक्य सर्वे शृगालाश्चिन्तयन्ति स्म—'यद्ययं केनाप्युपायेन म्रियते तदाऽस्माक मेतद्देहेन मासचतुष्टयस्य भोजनं भविष्यति' । तत्रैकेन वृद्ध-शृगालेन प्रतिज्ञातम्—'मया बुद्धिप्रभावादस्य मरणं साधयित-व्यम्' । अनन्तरं स वञ्चकः कर्पूरतिलकसमीपं गत्वा साष्टाङ्ग-

---

१. छेच । ६ । १७३ । इतितुक् ।

निरूपितः । अभिजनः । परावृत्य ।

पातं प्रणम्योवाच— देव, दृष्टिप्रसादं कुरु'। हस्ती ब्रूते— 'कस्त्वम् । कुतः समायातः' । सोऽवदत्— 'जम्बुकोऽहम् । सर्वैर्वनवासिभिः पशुभिर्मिलित्वा भवत्सकाशं प्रस्थापितः । यद्विना राज्ञाऽवस्थातुं न युक्तं तदत्राटवीराज्येऽभिषेक्तुं भवान्सर्वस्वामिगुणोपेतो निरूपितः । यतः—

य: कुलाभिजनाऽऽचारैरतिशुद्धः प्रतापवान् ।
धार्मिको नीतिकुशलः स स्वामी युज्यते भुवि ॥ ६१ ॥

तद्यथा लग्नवेला न विचलति तथा कृत्वा सत्वरमागम्यतां देवेन' । इत्युक्त्वोत्थाय चलितः । ततोऽसौ राज्यलोभाऽऽकृष्टः कर्पूरतिलकः शृगालवर्त्मना धावन्महापङ्के निमग्नः । ततस्तेन हस्तिनोक्तम्—'सखे शृगाल, किमधुना विधेयम् । पङ्के निपतितोऽहं म्रिये[1] । परावृत्य पश्य । शृगालेन विहस्योक्तम्—'देव, मम पुच्छकावलम्बनं कृत्वोत्तिष्ठ । यन्मद्विधस्य वचसि त्वया प्रत्ययः कृतस्तदनुभूयतामशरणं दुःखम् ।

तथा चोक्तम्—

यदा सत्संगरहितो भविष्यसि भविष्यसि ।
तदा सज्जनगोष्ठीषु पतिष्यसि पतिष्यसि ॥ ६२ ॥

ततो महापङ्के निमग्नो हस्ती शृगालैर्भक्षितः । अतोऽहं ब्रवीमि—'उपायेन हि यच्छक्यम्' इत्यादि ।

१. मृङ्–लटि–उत्तमपुरुषैकवचने ।

श्वापदः। विमुग्धः। काननम्।

---

तच्छ्रुत्वा कूर्मः सभयमाह— 'जलाशयान्तरं गच्छामि'। काकमृगौ[1]ऊचतुः—'एवमस्तु'। ततो हिरण्यको विहस्याऽऽह— 'जलाशयाऽन्तरे प्राप्ते मन्थरस्य कुशलम्। स्थले गच्छतः[2] कः प्रतीकारः। यतः—

अम्भांसि जलजन्तूनां दुर्गं दुर्गनिवासिनाम्।
स्वभूमिः श्वापदादीनां राज्ञां मन्त्री परं बलम्॥ ६३॥

तद्वि[3]तद्वचनमवधीर्य महता भयेन विमुग्ध इव तं जलाशयमुत्सृज्य मन्थरश्चलितः। तेऽपि हिरण्यकादयः स्नेहादनिष्टं शंकमाना मन्थरमनुगच्छन्ति। ततः स्थले गच्छन्[4]केनापि व्याधेन काननं पर्यटता मन्थरः प्राप्तः। प्राप्य तं गृहीत्वोत्थाप्य धनुषि बद्ध्वा भ्रमन्क्लेशात्क्षुत्पिपासाकुलः स्वगृहाभिमुखं चलितः। अथ मृगवायसमूषिकाः[6] परं विषादं गच्छन्तस्तमनुजग्मुः[7]। ततो हिरण्यको विलपति—

---

१. द्वन्द्वः। एचोऽयवायावः। ६। १। ७८। इत्यावादेशश्च।
२. षष्ठ्या एक वचनम्।
३. सन्धि विभागः कार्य्यः।
४. लटः शतृ शानचावप्रथमा समानाधिकरणे। ३। २। १२४। इतिशतृ।
५. सप्तम्या एकवचनम्।
६. द्वन्द्वः।
७. गम्-धातोर्लिटि प्रथमपुरुषे बहुवचनम्।

अर्णवः। छिद्रेषु। मुहुः। सन्तानः। कर्तरिका।

---

'एकस्य दुःखस्य न यावदन्तं
गच्छाम्यहं पारमिवार्णवस्य।
तावद्द्वितीयं समुपस्थितं मे
छिद्रेष्वनर्था बहुलीभवन्ति ॥ ६४ ॥

इति मुहुर्विचिन्त्य—'अहो दुर्दैवम्'। यतः—

स्वकर्मसंतानविचेष्टितानि।
कालान्तरावर्तिशुभाशुभानि।
इहैव दृष्टानि मयैव तानि
जन्मान्तराणीव दशान्तराणि ॥ ६५ ॥

इति बहु विलप्य हिरण्यकश्चित्रांगलघुपतनकावाऽऽह—यावदयं व्याधो वनान्न[1] निःसरति तावन्मन्थरं मोचयितुं यत्नः क्रियताम्'। तावूचतुः—'सत्वरं कार्यमुच्यताम्'। हिरण्यको-ब्रूते—चित्रांगो जलसमीपं गत्वा मृतमिवाऽऽत्मानं दर्शयतु। काकश्च तस्योपरि स्थित्वा चञ्च्वा किमपि विलिखतु। नूनमनेन लुब्धकेन तत्र कच्छपं परित्यज्य मृगमांसार्थिना सत्वरं गन्तव्यम्। ततोऽहं मंथरस्य बन्धनं छेत्स्यामि। संनिहिते लुब्धके भवद्भ्यां पलायितव्यम्'। चित्रांगलघुपतनकाभ्यां शीघ्रं गत्वा तथानुष्ठिते सति स व्याधः श्रान्तः पानीयं पीत्वा तरोरधस्तादुपविष्टस्तथाविधं मृगमपश्यत्। ततः कर्तरिकामादाय प्रहृष्टमना मृगान्तिकं चलितः।

---

१. यरोऽनुनासिकेऽनुनासिको वा। ८। ४। ४५। इत्यनुनासिकः।

प्रत्यावृत्य। असमीक्ष्यकारी। ध्रुवम्।
समीहितम्। नवोढा।

---

तत्रान्तरे हिरण्यकेनाऽऽगत्य मन्थरस्य बन्धनं छिन्नम्[1]। सकूर्मः सत्वरं जलाशयं प्रविवेश। स मृग आसन्नं तं व्याधं विलोक्योत्थाय पलायितः।

प्रत्याऽऽवृत्य लुब्धको यावत्तरुतलमायाति तावत्कूर्ममपश्यन्नचिन्तयत्—'उचितमेवैतन्ममाऽसमीक्ष्यकारिणः। यतः—

यो ध्रुवाणि परित्यज्य, अध्रुवाणि निषेवते।
ध्रुवाणि तस्य नश्यन्ति, अध्रुवं नष्टमेव हि॥ ९६॥

ततोऽसौ स्वकर्मवशान्निराशः कटकं प्रविष्टः। मंथरादयः सर्वे त्यक्ताऽऽपदः स्वस्थानं गत्वा यथासुखमास्थिताः।

अथ राजपुत्रैः सानंदमुक्तम्—'सर्वं श्रुतवंतः सुखिनो वयम्। सिद्धं नः समीहितम्'। विष्णुशर्मोवाच— एतावता भवतामभिलषितं संपन्नम्। अपरमपीदमस्तु—

मित्रं प्राप्नुत सज्जना जनपदैर्लक्ष्मीः समालम्ब्यतां
भूपालाः परिपालयन्तु वसुधां शश्वत्स्वधर्मे स्थिताः॥

आस्तां मानस तुष्टये सुकृतिनां नीतिर्नवोढेव वः
कल्याणं कुरुतां जनस्य भगवांश्चन्द्रार्धचूडामणिः॥ ९७॥

**इति हितोपदेशे मित्रलाभो नाम-प्रथमः कथासंग्रहः समाप्तः।**

---

१. छिद्-धातोः क्तप्रत्यये-रदाभ्यांनिष्ठातोनः पूर्वस्यच दः। ८। २। ४२। इतिदस्य तस्यचस्थाने नः।

पिशुनः । प्रचुरः । मतिः । अवक्षयः । निधिः ।

---

## सुहृद्भेदः ।

अथ राजपुत्रा ऊचुः— 'आर्य, मित्रलाभः श्रुतस्तावदस्माभिः । इदानीं सुहृद्भेदं श्रोतुमिच्छामः । विष्णुशर्मोवाच— 'सुहृद्भेदं तावच्छृणुत, यस्याऽयमाऽऽद्यः श्लोकः—

> वर्धमानो महास्नेहो मृगेन्द्रवृषयो र्वने ।
> पिशुनेनाऽतिलुब्धेन जम्बुकेन विनाशितः' ॥ १ ॥

राजपुत्रैरुक्तम्— 'कथमेतत्' । विष्णुशर्मा कथयति—

अस्ति दक्षिणापथे सुवर्णवती नाम नगरी । तत्र वर्धमानोनाम वणिग्निवसति । तस्य प्रचुरेऽपि वित्तेऽपरान्बन्धूनतिसमृद्धान् समीक्ष्य पुनरर्थवृद्धिः करणीयेति मतिर्बभूव । यतः—

> अधोऽधः पश्यतः कस्य महिमा नोपचीयते ।
> उपर्युपरि पश्यन्तः सर्व एव दरिद्रति ॥ २ ॥

तथा चोक्तम्—

> अलब्धं चैव लिप्सेत लब्धं रक्षेदवक्षयात् ।
> रक्षितं वर्धयेत्सम्यग्वृद्धं तीर्थेषु निक्षिपेत् ॥ ३ ॥

यतोऽलब्धमिच्छतोऽर्थयोगादर्थस्य प्राप्तिरेव । लब्धस्याप्यरक्षितस्य निधेरपि स्वयं विनाशः । अपि च । अवर्धमानश्चार्थः

---

१. विनाशित इतिकर्म क्रिया । जम्बुकेनेति कर्ता । स्नेह–इति कर्म । वर्धमानः, महान्, इतिकर्म विशेषणम् ।

२. लटि-प्रथमपुरुषे बहुवचनम् ।

अञ्जनवत् । धुरि । जानु । प्रत्यूहः । महाकायम् ।

काले स्वल्पव्ययोऽप्यञ्जनवत्क्षयमेति । अनुपभुज्यमानश्च निष्प्रयोजन एव सः । तथा चोक्तम्—

धनेन किं यो न ददाति नाऽश्नुते
बलेन किं यश्च रिपून्न बाधते ।
श्रुतेन किं यो न च धर्ममाचरत्
किमात्मना यो न जितेन्द्रियो भवेत् ॥ ४ ॥

इति संचिन्त्य नन्दकसंजीवकनामानौ वृषभौ [1]धुरि नियोज्य शकटं नानाविधद्रव्यसंपूर्णं कृत्वा वाणिज्येन गतः काश्मीरं[2] प्रति ।

अथ गच्छतः तस्य सुदुर्गनाम्नि महारण्ये संजीवको भग्नजानुर्निपतितः । तमालोक्य वर्धमानोऽचिन्तयत्—

करोतु नाम नीतिज्ञो व्यवसायमितस्ततः ।
फलं पुनस्तदेवाऽस्य यद्विधेर्मनसि स्थितम् ॥ ५ ॥

किंतु—

विस्मयः सर्वथा हेयः प्रत्यूहः सर्वकर्मणाम् ।
तस्माद्विस्मयमुत्सृज्य साध्ये सिद्धिर्विधीयताम् ॥ ६ ॥

इति संचिन्त्य संजीवकं तत्र परित्यज्य वर्धमानः पुनः स्वयं धर्मपुरं नाम नगरं गत्वा महाकायमन्यं वृषभमेकं समानीय धुरि

१. सप्तम्या एकवचने ।
२. अभितः परितःसमया निकषाहाप्रति योगेऽपि । इति द्वितीया ।

नियोज्य चलितः । ततः संजीवकोऽपि कथंकथमपि खुरत्रये भारंकृत्वोत्थितः । यतः—

अरक्षितं तिष्ठति दैवरक्षितं
सुरक्षितं दैवहतं विनश्यति ।
जीवत्यनाथोऽपि वने विसर्जितः
कृतप्रयत्नोऽपि गृहे न जीवति ॥ ७ ॥

ततो दिनेषु गच्छत्सु स्वेच्छाऽऽहारविहारं कृत्वाऽरण्यं भ्राम्यन् हृष्टपुष्टांगो बलवन्ननाद । तस्मिन्वने पिंगलकनामा सिंहः स्वभुजोपार्जितराज्यसुखमनुभवन्निवसति ।

स चैकदा पिपाऽऽसाकुलितः पानीयं पातुं यमुनाकच्छमगच्छत् । तेन च तत्र सिंहेनाऽननुभूतपूर्वमकालघनगर्जितमिव संजीवकनर्दितमश्रावि । तच्छ्रुत्वा पानीयमपीत्वा स चकितः परिवृत्य स्वस्थानमाऽऽगत्य किमिदमित्यालोचयँस्तूष्णीं स्थितः । स च तथाविधः करटकदमनकाभ्यामस्य मंत्रिपुत्राभ्यां शृगालाभ्यां दृष्टः । तं तथाविधं दृष्ट्वा दमनकः करटकमाह—'सखे करटक, किमयमुदकार्थी स्वामी पानीयमपीत्वा सचकितो मन्दं मन्दमवतिष्ठते । करटको ब्रूते—'मित्र दमनक' अस्मन्मतेनाऽस्य सेवैव क्रियते । यदि तथा भवति तर्हि किमनेन स्वामिचेष्टानिरूपणेनास्माकम् । यतोऽनेन राज्ञा विनाऽपराधेन चिरमवधीरिताभ्यामावाभ्यां महद्दुःखमनुभूतम्—

**पण्यस्त्री । विहारः । करपत्रम् ।**
**कीलकः । यूथः ।**

---

अबुधैरर्थलाभाय पण्यस्त्रीभिरिव स्वयम् ।
आत्मा संस्कृत्य संस्कृत्य परोपकरणीकृतः ॥ ८ ॥

**दमनको ब्रूते—'मित्र सर्वथा मनसापि नैतत्कर्तव्यम् ! यतः—**

कथं नाम न सेव्यन्ते यत्नतः परमेश्वराः ।
अचिरेणैव ये तुष्टाः पूरयन्ति मनोरथान् ॥ ९ ॥

**करटको ब्रूते— 'तथापि किमनेनाऽस्माकं व्यापारेण । यतोऽव्यापारेषु व्यापारः सर्वथा परिहरणीयः । पश्य—**

अव्यापारेषु व्यापारं यो नरः कर्तुमिच्छति ।
स भूमौ निहतः शेते कीलोत्पाटीव वानरः, ॥ १० ॥

**दमनकः पृच्छति—'कथमेतत् ।, करटकः कथयति—**

**कथा १ ।**

**अस्ति मगधदेशे धर्मारण्यसंनिहित वसुधायां शुभदत्तनाम्ना कायस्थेन विहारः कर्तुमारब्धः । तत्र करपत्रदार्यमाणैकस्तम्भस्य कियद्दूर स्फाटितस्य काष्ठखण्डद्वयमध्ये कीलकः सूत्रधारेण निहितः । तत्र बलवान्वानरयूथः क्रीडन्नागतः । एको वानरः कालप्रेरित इव तं कीलकं हस्ताभ्यां धृत्वोपविष्टः । तत्र तस्य लम्बमानं पुच्छं काष्ठखण्डद्वयाभ्यन्तरे प्रविष्टम् । अनन्तरं स च सहज चपलतया महता प्रयत्नेन तं कीलकमाकृष्टवान् । आकृष्टे**

च कीलके चूर्णित पुच्छः पंचत्वं गतः । अतोऽहं ब्रवीमि—'अव्यापारेषु व्यापारम्' इत्यादि । दमनको ब्रूते—'तथापि स्वामि[1]चेष्टानिरूपणं सेवकेनाऽवश्यं करणीयम्' । करटको ब्रूते—'सर्वस्मिन्नधिकारे य एव नियुक्तः प्रधानमन्त्री स करोतु । यतोऽनुजीविना पराधिकारचर्चा सर्वथा न कर्तव्या ।

पश्य—

पराधिकारचर्चां यः कुर्यात्स्वामिहितेच्छया ।
स[2] विषीदति चीत्काराद्गर्दभस्ताडितो यथा' ॥ ११ ॥

दमनकः पृच्छति—'कथमेतत्' करटको ब्रूते—

## कथा २ ।

अस्ति वाराणस्यां कर्पूरपटको नाम रजकः । स च कदाचित् कार्य परिश्रान्तो निशि गाढं प्रसुप्तः । तदनन्तरं तद्गृहद्रव्याणि हर्तुं चौरः प्रविष्टः । तस्य प्रांगणे गर्दभो बद्धस्तिष्ठति । कुक्कुरश्चोपविष्टोऽस्ति । अथ गर्दभः श्वानमाह—'सखे, भवतस्तावदयं व्यापारः । तत्किमिति त्वमुच्चैः शब्दं कृत्वा स्वामिनं न जागरयसि । कुक्कुरो ब्रूते—'भद्र, मम नियोगस्य चर्चा त्वया न कर्तव्या ।

---

१. स्वामिनश्चेष्टा-स्वामिचेष्टा तस्या निरूपणम्

२. एतत्तदोः सुलोपोऽकोरनञ्समासे हलि । ६ । १ । १३२ । इति सुलोपः

विधुरदर्शनम् । उपजीवी । बर्बरः । प्रबुद्धः ।
अन्वेषणम् । सरोषम् ।

---

त्वमेव किं न जानासि यथा तस्याऽहर्निशं गृहरक्षां करोमि । योऽयं चिरान्निर्वृतो ममोपयोगं न जानाति तेनाऽधुना ममाऽऽहारदानेऽपि मन्दादरः । यतो विना विधुरदर्शनं स्वामिन उपजीवीषु मन्दाऽऽदराः भवन्ति' । गर्दभो ब्रूते—'शृणुरे बर्बर ।

'याचते कार्यकाले यः स किंभृत्यः[1] स किंसुहृत् ।

कुक्कुरोब्रूते—

भृत्यान्संभाषयेद्यस्तु कार्यकाले स किंप्रभुः ॥ १२ ॥

ततो गर्दभः सकोपमाह—'अरे दुष्टमते, पापीयांस्त्वं यद्विपत्तौ स्वामिकार्य उपेक्षां करोषि । भवतु तावत् । यथा स्वामी जागरिष्यति तथा मया कर्तव्यम् ।

इत्युक्त्वाऽतीव चीत्कारशब्दं कृतवान् । ततः स रजकस्तेन चीत्कारेण प्रबुद्धो निद्राभंगकोपादुत्थाय गर्दभं लगुडेन ताडयामास । तेनाऽसौ पञ्चत्वमगमत् । अतोऽहं ब्रवीमि—'पराधिकारचर्चाम्' इत्यादि । पश्य—पशूनामन्वेषणमेवास्मन्नियोगः । स्वनियोगचर्चा क्रियताम् । विमृश्य—'किंत्वद्य तया चर्चया न प्रयोजनम् । यत आवयोर्भक्षितशेषाहारः प्रचुरोऽस्ति' । दमनकः सरोषमाह— 'कथमाहारार्थी भवान्केवलं राजानं सेवते । एतदयुक्तमुक्तं त्वया । यतः—

---

१. कुत्सितो भृत्यः किंभृत्यः । विं.क्षेपे । २ । १ । ६४ इति समासः ।

जठरम् । आयत्तः ।

सुहृदामुपकारकारणाद्-
द्विषतामप्यपकारकारणात् ।
नृपसंश्रय इष्यते बुधै[1]
र्जठरं को न बिभर्ति केवलम् ॥ १३ ॥

अपरमपि—

अहितहितविचारशून्यबुद्धेः
श्रुतिसमयैर्बहुभिस्तिरस्कृतस्य ।
उदरभरणमात्रकेवलेच्छोः
पुरुषपशोश्च पशोश्च को विशेषः ॥ १४ ॥

करटको ब्रूते—'आवां तावदप्रधानौ । तदाप्यावयोः किमनया विचारणया' । दमनको ब्रूते—कियता कालेनाऽमात्याः प्रधानतामप्रधानतां वा लभन्ते । यतः—

न कस्यचित्कश्चिदिह स्वभावा-
द्भवत्युदारोऽभिमतः खलो वा ।
लोके गुरुत्वं विपरीततां वा
स्वचेष्टितान्येव नरं नयन्ति ॥ १५ ॥

तद्भद्रम् । स्वयत्नाऽयत्तो ह्यात्मा सर्वस्य । करटको ब्रूते—'अद्य भवान्किंब्रवीति' । स आह—'अयं तावत्स्वामी

१. अत्रबुधैरिति कर्तृपदम् । कर्मवाच्यतया तृतीयान्तम् । इष्यत इति क्रिया । नृप संश्रय इति कर्म ।

उदीरितः। हयाः। नागाः। नोदिताः। ऊहति।
वक्तुम्। प्रज्ञा। अनाहूतः।

---

पिंगलकः कुतोऽपि कारणात्सचकितः परिवृत्योपविष्टः'। करटको ब्रूते—'किंतत्त्वं जानासि'। दमनको ब्रूते—'किमत्राऽविदितमस्ति। उक्तं च—

उदीरितोऽर्थः पशुनाऽपि गृह्यते
हयाश्च नागाश्च वहन्ति नोदिताः।
अनुक्तमप्यूहति पण्डितो जनः
परङ्गितज्ञानफला[1] हि बुद्धयः॥ १६॥

आकारै[2]रिङ्गितै[3]र्गत्या चेष्टया भाषणेन च।
नेत्रवक्त्र विकारेण लक्ष्यतेऽन्तर्गतं मनः॥ १७॥

अत्र भयप्रस्तावे प्रज्ञाबलेनाऽहमेनं स्वामिनमात्मीयं करिष्यामि। करटको ब्रूते—'सखे त्वं सेवाऽनभिज्ञः। पश्य—

अनाहूतो विशेद्यस्तु, अपृष्टो बहु भाषते।
आत्मानं मन्यते प्रीतं भूपालस्य स दुर्मतिः'॥ १८॥

दमनको ब्रूते—'भद्र, कथमहं सेवाऽनभिज्ञः। पश्य—

किमप्यस्ति स्वभावेन सुन्दरं वाप्यसुन्दरम्।
यदेव रोचते यस्मै भवेत्तत्तस्य सुन्दरम्॥ १९॥

---

१. परेषामिङ्गितै र्ज्ञानं फलं यासां ताः।
२. क्रोध विषाद प्रसादादि भावाविष्ट शरीरावयवस्वरूपैरित्यर्थः।
३. अभिंप्राय व्यंजक चेष्टा विशेषैरित्यर्थः।

अवमन्यते । प्रमदा । अनुरक्तः ।

---

यतः—

यस्य यस्य हि यो भावस्तेन तेन हि तं नरम् ।
अनुप्रविश्य मेधावी क्षिप्रमात्मवशं नयेत् ॥ २० ॥

करटको ब्रूते— 'कदाचिदत्रामनवसरप्रवेशादवमन्यते स्वामी । स चाह—'अस्त्वेवम् । तथाप्यनुजीविना स्वामिसांनिध्यमवश्यं करणीयम् । यतः—

दोषभीतेरनारम्भस्तत्कापुरुषलक्षणम् ।
कैरजीर्णभयाद्भ्रातर्भोजनं परिहीयते ॥ २१ ॥

पश्य—

आसन्नमेव नृपतिर्भजते मनुष्यं,
विद्याविहीनमकुलीनमसंगतं वा ।
प्रायेण भूमिपतयः प्रमदा लताश्च
यत्पार्श्वतो वसति तं परिवेष्टयन्ति' ॥ २२ ॥

करटको ब्रूते—'अथ तत्र गत्वा किं वक्ष्यति भवान्' । स आह— 'शृणु । किमनुरक्तो विरक्तो वा मयि स्वामीति ज्ञास्यामि' । करटको ब्रूते— 'किंतज्ज्ञानलक्षणम्' । दमनको ब्रूते—शृणु ।

---

१. सम्बोधनम् ।

दूरादवेक्षणं ह्रासः संप्रश्नेष्वादरो भृशम् ।
परोक्षेऽपि गुणश्लाघा स्मरणं प्रियवस्तुषु ॥ २३ ॥

एतज्ज्ञात्वा यथा चाऽयं ममाऽऽयत्तो भविष्यति तथा करिष्यामि । यतः—

अपायसंदर्शनजां[1] विपत्ति-
मुपायसंदर्शनजां च सिद्धिम् ।
मेधाविनो नीतिविधिप्रयुक्तां
पुरः स्फुरन्तीमिव दर्शयन्ति ॥ २४ ॥

करटको ब्रूते—'तथाप्यप्राप्ते प्रस्तावे न वक्तुमर्हसि । यतः—

अप्राप्तकालं[2] वचनं बृहस्पतिरपि ब्रुवन् ।
प्राप्नुयाद् बह्ववज्ञानमपमानं च शाश्वतम् ॥ २५ ॥

दमनको ब्रूते—'मित्र, मा भैषीः । नाऽहमप्राप्ताऽवसरं वचनं वदिष्यामि । यतः—

आपद्युन्मार्गगमने कार्यकालात्ययेषु च ।
अपृष्टेनाऽपि वक्तव्यं भृत्येन हितमिच्छता ॥ २६ ॥

यदि प्राप्ताऽवसरेणाऽपि मया मन्त्रो न वक्तव्यस्तदा मन्त्रित्वमेव ममाऽनुपपन्नम् । यतः—

---

१. अपायस्य संदर्शनेन जाताम् ।

२. नप्राप्तः कालो यस्य तत्-अप्राप्तकालम् ।

**अनुजानीहि । कदर्थितस्य । तनूनपातः ।**

---

कल्पयति येन वृत्तिं येन च लोके प्रशस्यते सद्भिः ।
स गुणस्तेन च गुणिना रक्ष्यः संवर्धनीयश्च ॥ २७ ॥

तद्भद्र, अनुजानीहि माम् । गच्छामि' । करटको ब्रूते—'शुभमस्तु । शिवास्ते पन्थानः । यथाभिलषितमनुष्ठीयताम्' इति । ततो दमनको विस्मत इव पिंगलकसमीपं गतः ।

अथ दूरादेव सादरं राज्ञा प्रवेशितः साष्टांगप्रणिपातं प्रणिपत्योपविष्टः । राजाऽऽह—'चिराद्दृष्टोऽसि' । दमनको ब्रूते—'यद्यपि मया सेवकेन श्रीमद्देवपादानां न किंचित्प्रयोजनमस्ति तथापि प्राप्तकालमनुजीविना सांनिध्यमवश्यंकर्तव्यमित्यायातोऽस्मि । यद्यपि चिरेणाऽवधीरितस्य देवपादैर्मे बुद्धिनाशः शंक्यते, तदपि न शंकनीयम् । यतः—

कदर्थितस्याऽपि हि धैर्यवृत्ते-
र्बुद्धेर्विनाशो नहि शंकनीयः ।
अधः कृतस्याऽपि तनूनपातो—
नाऽधः शिखा याति कदाचिदेव ॥ २८ ॥

देव, तत्सर्वथा विशेषज्ञेन स्वामिना भवितव्यम् । यतः—

मणिर्लुठति पादेषु, काचः शिरसि धार्यते ।
यथैवास्ते तथैवास्तां, काचः काचो मणिर्मणिः ॥ २९ ॥

---

१. प्रपूर्वात् शंसु-स्तुताविति धातोः कर्मणि । सार्वधातुकेयक् । ३ । १ । ६७ इतियक् । अनिदितां हल उपधायाः क्ङिति । ६ । ४ । २४ । इति नलोपश्च ।

यतः—

स्थान एव नियोज्यन्ते भृत्याश्चाभरणानि च ।
न हि चूडामणिः पादे नूपुरं शिरसा कृतम् ॥ ३० ॥

अपि च—

बालादपि ग्रहीतव्यं युक्तमुक्तं मनीषिभिः ।
रवेरविषये किं न प्रदीपस्य प्रकाशनम्' ॥ ३१ ॥

पिंगलकोऽवदत्—'भद्रदमनक, किमेतत् । त्वमस्मदीयप्रधानामात्यपुत्र इयन्तंकालं यावत्कुतोऽपि खलवाक्यान्नागतोऽसि । इदानीं यथाभिमतं ब्रूहि' । दमनको ब्रूते— 'देव, पृच्छामि किंचित् । उच्यताम् । उदकार्थी स्वामी पानीयमपीत्वा किमिति विस्मित इव तिष्ठति' । पिंगलकोऽवदत्— भद्रमुक्तं त्वया। किंत्वेतद्रहस्यं वक्तुं काचिद्विश्वासभूमिर्नास्ति । तथापि निभृतं कृत्वा कथयामि । शृणु । संप्रति वनमिदमपूर्वसत्वाऽधिष्ठितमतोऽस्माकं त्याज्यम् । अनेन हेतुना विस्मितोऽस्मि । तथा च श्रुतो[1] मयाऽपि महानपूर्वशब्दः । शब्दानुरूपेणाऽस्य प्राणिनो महता बलेन भवितव्यम् । दमनको ब्रूते— देव, अस्ति तावदयं महान्भयहेतुः । स शब्दोऽस्माभिरप्याऽऽकर्णितः । किंतु स किंमन्त्री यः प्रथमं भूमित्यागं पश्चाद्युद्धं चोपदिशति । अस्मिन्कार्यसंदेहे भृत्यानामुपयोग एव ज्ञातव्यः । सिंहो ब्रूते—'भद्र' महती शंका मां बाधते' । दमनकः पुनराह स्वगतम्—'अन्यथा' राज्यसुखं

१. श्रुतोतोः कर्मणि क्तः । मयेति कर्ता । अपूर्वशब्द इतिकर्म ।

सर्वस्वम् । उपायनम् ।
पद्मा । क्रोडः । अवमन्तव्यः । अपनीतः ।

परित्यज्य स्थानान्तरं गन्तुं कथं मां संभाषसे' । प्रकाशं ब्रूते--'देव, यावदहं जीवामि तावद्भयं न कर्तव्यम् । किंतु करटकादयोऽप्याश्वास्यन्तां यस्मादापत्प्रतीकारकाले दुर्लभः पुरुषसमवायः ।

ततस्तौ दमनककरटकौ राज्ञा सर्वस्वेनापि पूजितौ भयप्रतीकारं प्रतिज्ञाय चलितौ । करटको गच्छन् दमनकमाह--'सखे, किं शक्यप्रतीकारो भयहेतुरशक्यप्रतीकारो वेति न ज्ञात्वा भयोपशमं प्रतिज्ञाय कथमयं महाप्रसादो गृहीतः । यतोऽनुपकुर्वाणो[1] न कस्याप्युपायनं गृह्णीयाद्विशेषतो राज्ञः । पश्य--

यस्य प्रसादे पद्मास्ते विजयश्च पराक्रमे ।
मृत्युश्च वसति क्रोडे सर्वतेजोमयो हि सः ॥ ३२ ॥

यथा हि--

बालोऽपि नावमन्तव्यो मनुष्य इति भूमिपः ।
महती देवता ह्येषा नररूपेण तिष्ठति ॥ ३३ ॥

दमनको विहस्याह--'मित्र, तूष्णीमास्यताम् । ज्ञातं मया भयकारणम् । बलीवर्दनर्दितमेतत् । वृषभाश्चास्माकमपि भक्ष्याः । किं पुनः सिंहस्य' । करटको ब्रूते--यद्येवं तदा किं पुनः स्वामित्रासस्तत्रैव किमिति नापनीतः । दमनको ब्रूते--'यदि स्वामित्रासस्तत्रैव मुच्यते तदा कथमयं महाप्रसादलाभः स्यात् । अपरं च--

निरपेक्षो न कर्तव्यो[2] भृत्यैः स्वामी कदाचन ।
निरपेक्षं प्रभुं कृत्वा भृत्यः स्याद्दधिकर्णवत् ॥ ३४ ॥

१. उपोपसृष्टात्कृ-धातोः शानच् । नञ् समासश्च ।
१. कृ-धातोः तव्यत्तव्यानीयरः । ३ । १ । ९६ । इति कर्मणि तव्यप्रत्ययः ।

केसरः । लूनम् । पुरस्कार्य्यः । अवसन्नः ।

---

करटकः पृच्छति —'कथमेतत्', । दमनकः कथयति—

कथा ३ ।

अस्त्युत्तरापथेऽर्बुदशिखरनाम्नि पर्वते दुर्दान्तो नाम महाविक्रमः सिंहः । तस्य पर्वतकन्दरमधिशयानस्य केसराग्रं कश्चिन्मूषकः प्रत्यहं छिनत्ति । ततः केसराग्रं लूनं[1] दृष्ट्वा कुपितो विवरान्तर्गतं मूषकमलभमानोऽचिन्तयत्--

'क्षुद्रशत्रु र्भवेद्यस्तु विक्रमान्नैव लभ्यते ।
तमाहन्तुं पुरस्कार्यः सदृशस्तस्य सैनिकः ॥ ३५ ॥

इत्यालोच्य तेन ग्रामं गत्वा विश्वासं कृत्वा दधिकर्णनामा विडालो यत्नेनानीय मांसाहारं दत्त्वा स्वकन्दरे स्थापितः । अनन्तरं तद्भयान्मूषकोऽपि बिलान्न निःसरति । तेनासौ सिंहोऽक्षतकेसरः सुखं स्वपिति । मूषकशब्दं यदा यदा शृणोति तदा तदा मांसाहारदानेन तं विडालं संवर्धयति ।

अथैकदा स मूषकः क्षुधापीडितो बहिः संचरन्विडालेन प्राप्तो व्यापादितश्च । अनन्तरं स सिंहोऽनेककालं यावन्मूषकं न पश्यति तत्कृतरावमपि न शृणोति तदा तस्यानुपयोगाद्व विडालस्याऽप्याऽऽहारदाने मन्दादरो बभूव । ततोऽसावाहारविरहाद्दुर्वलो दधिकर्णोऽवसन्नो बभूव । अतोऽहं ब्रवीमि—'निरपेक्षो न कर्तव्यः' इत्यादि ॥ ततो दमनककरटकौ संजीवकसमीपं गतौ । तत्र करटकस्तरुतले साटोप मुपविष्टः ।

---

1. लूञ्-छेदने, अस्मात्क्त प्रत्यये । ल्वादिभ्यः । ८।२।४४ । इति निष्ठातस्य नः ।

केशवः । चेदिः । घनध्वनिः ।

---

दमनकः संजीवकसमीपं गत्वाऽब्रवीत्—'अरे वृषभ, एषोऽहं राज्ञा पिंगलकेनाऽरण्यरक्षार्थं नियुक्तः। सेनापतिः करटकः समाज्ञापयति—'सत्वरमागच्छ। न चेदस्मदरण्याद्दूरमपसर। अन्यथा ते विरुद्धं फलं भविष्यति। न जाने क्रुद्धः स्वामी किं विधास्यति।' तच्छ्रुत्वा संजीवकश्चाऽऽयात्।

आज्ञाभंगो नरेन्द्राणां ब्राह्मणानामनादरः।
पृथक्शय्या च नारीणा मशस्त्रविहितो वधः ॥ ३६ ॥

ततो देशव्यवहाराऽभिज्ञः संजीवकः सभयमुपसृत्य साष्टांगपातं करटकं प्रणतवान्[1]।

अथ संजीवकः साशंकमाह—'सेनापते[2], किं मया कर्तव्यम्। तदभिधीयताम्'। करटको ब्रूते—'वृषभ, अत्र कानने तिष्ठसि। अस्मद्देवपादारविन्दं प्रणम। संजीवको ब्रूते—'तदभयवाचं मे यच्छ। गच्छामि। करटको ब्रूते—'शृणु रे बलीवर्द, अलमनया शंकया। यतः—

प्रतिवाचमदत्त केशवः
शपमानाय न चेदिभूभुजे।
अनुहुंकुरुते घनध्वनिं
न हि गोमायुरुतानि केसरी ॥ ३७ ॥

---

१ प्रपूर्वक णम् धातोः कर्तरि क्तवतुः।
२ सेनायाः पतिः सेनापतिस्तस्य सम्बोधने।

प्रभञ्जनः । उच्छ्रितान् । सज्जीभूय ।
कुट्टनी । जनप्रवादः ।

---

अन्यच्च ।

तृणानि नोन्मूलयति प्रभंजनो
मृदूनि नीचैः प्रणतानि सर्वतः ।
स चोच्छ्रितानेव तरून्प्रबाधते
महान्महत्येव करोति विक्रमम् ॥ ३८ ॥

ततस्तौ संजीवकं कियद्दूरे संस्थाप्य पिंगलकसमीपं गतौ ।

ततो राज्ञा सादरमवलोकितौ, प्रणम्योपविष्टौ । राजाह— 'त्वया स दृष्टः?' । दमनको ब्रूते—'देव, दृष्टः । किंतु यद्देवेन ज्ञातं तत्तथा । महानेवाऽसौ देवं द्रष्टुमिच्छति । किन्तु महाबलोऽसौ ततः सज्जीभूयोपविश्य दृश्यताम् । शब्दमात्रादेव न भेतव्यम् । तथा चोक्तम्—

शब्द मात्रान्नभेतव्य मज्ञात्वा शब्दकारणम् ।
शब्दहेतुं परिज्ञाय कुट्टनी गौरवं गता ॥ ३९ ॥

राजाऽऽह—'कथमेतत् ।' दमनकः कथयति—

### कथा ४ ।

अस्ति श्रीपर्वतमध्ये ब्रह्मपुराख्यं नगरम् । तच्छिखरप्रदेशे घण्टाकर्णो नाम राक्षसः प्रतिवसतीति जनप्रवादः श्रूयते । एकदा घण्टामादाय पलायमानः कश्चिच्चौरो व्याघ्रेण व्यापादितः । तत्पाणिपतिता घण्टा वानरैः प्राप्ता । वानरास्तां घण्टा-

मर्कटः । साधयामि । आकीर्णानि ।
फलासक्ताः । आहारः ।

मनुक्षणं वादयन्ति । ततो नगरजनैः स मनुष्यः खादितो दृष्टः, प्रतिक्षणं घण्टारवश्च श्रूयते। अनन्तरं घण्टाकर्णः कुपितो मनुष्यान्खादति घण्टां च वादयतीत्युक्त्वा सर्वे जना नगरात् पलायिताः । ततः करालया नाम कुट्टन्या विमृश्याऽनवसरोऽयं घण्टावादः । तत्किं मर्कटा घण्टां वादयन्तीति स्वयं विज्ञाय राजा विज्ञापितः—'देव, यदि कियद्धनोपक्षयः क्रियते, तदाऽहमेनं घण्टाकर्णं साधयामि ।' ततो राज्ञा तस्यै धनं दत्तम्[1] । कुट्टन्या च मण्डलं कृत्वा तत्र गणेशादिपूजागौरवं दर्शयित्वा स्वयं वानरप्रियफलान्यादाय वनं प्रविश्य फलान्याकीर्णानि । ततो घण्टां परित्यज्य वानराः फलासक्ता बभूवुः । कुट्टनी च घण्टां गृहीत्वा नगरमागता सर्वजनपूज्याऽभवत् । अतोऽहं ब्रवीमि—'शब्दमात्रान्न भेतव्यम्' इत्यादि ॥ ततः संजीवक आनीय दर्शनं कारितः[2] । पश्चात्तत्र सः परमप्रीत्या निवसति ।

अथ कदाचित्तस्य सिंहस्य भ्राता स्तब्धकर्णनामा सिंहः समागतः । तस्याऽऽतिथ्यं कृत्वा समुपवेश्य पिंगलकस्तदाऽऽहाराय, पशुं हन्तुं चलितः । अत्रान्तरे संजीवको वदति— 'देव, अद्य हतमृगाणां[3] मांसानि क । राजाऽऽह—'दमनककरटकौ जानीतः।

१. दत्तमिति कर्मणि क्तः । तस्या इत्यत्र सम्प्रदान संज्ञायां चतुर्थी ।
२. णिजन्तात्करोतेः क्तः ।
३. हताश्च ते मृगा इति हतमृगास्तेषाम् ।

व्ययितम् । क्रमः । अगोचरेण । अनिवेद्य । अनवेक्षा । वैश्रवणः ।

---

संजीवको ब्रूते 'ज्ञायतां किमस्ति नास्ति वा । सिंहो विमृश्याह—'नास्त्येव तत्' । संजीवको ब्रूते—'कथमेतावन्मासं ताभ्यां खादितम्' । राजाऽऽह 'खादितं व्ययितमवधीरितं च । प्रत्यहमेष क्रमः' । संजीवको ब्रूते—'कथं श्रीमद्देवपादानामगोचरेणैवं क्रियते ।' अथ संजीवको ब्रूते—'नैतदुचितम् । तथा चोक्तम्—

नाऽनिवेद्य प्रकुर्वीत भर्तुः किंचिदपि स्वयम् ।
कार्यमापत्प्रतीकारादन्यत्र जगतीपते ॥ ४० ॥

एतच्च राज्ञः प्रधानं दूषणम्—

अतिव्ययोऽनवेक्षा च तथाऽर्जनमधर्मतः ।
मोक्षणं दूरसंस्थानां कोशव्यसनमुच्यते ॥ ४१ ॥

यतः—

क्षिप्रमायमनालोच्य व्ययमानः स्ववाञ्छया ।
परिक्षीयत एवासौ धनी वैश्रवणोपमः' ॥ ४२ ॥

स्तब्धकर्णो ब्रूते—'शृणु भ्रातः, चिराऽऽश्रितावेतौ दमनककरटकौ संधिविग्रहकार्याधिकारिणौ च कदाचिदर्थाऽधिकारे न नियोक्तव्यौ । अपरंच नियोगप्रस्तावे यन्मया श्रुतं तत्कथ्यते ।

ब्राह्मणः क्षत्रियो बन्धुर्नाधिकारे प्रशस्यते ।
ब्राह्मणः सिद्धमप्यर्थं कृच्छ्रेणाऽपि न यच्छति[1] ॥ ४३ ॥

---

१. यम् धातोर्लटि शपि च कृते-इषुगमि यमांछः । ७ । ३ ७७ । इति छः । ददातीत्यर्थः ।

परीवर्तः। यथावसरम्। सस्यम्। अर्थाधिकारः।
परिदेवनम्। सौहार्दम्।

---

प्राप्तार्थग्रहणं द्रव्यपरीवर्तोऽनुरोधनम्।
उपेक्षा बुद्धिहीनत्वं भोगोऽमात्यस्य दूषणम्॥ ४४॥

एतत्सर्वं यथाऽवसरं ज्ञात्वा व्यवहर्तव्यम्'[1]। सिंहो ब्रूते—'अस्ति तावदेवम् किंत्वेतौ सर्वथा न मम वचनकारिणौ। स्तब्धकर्णो ब्रूते—एतत्सर्वमनुचितं सर्वथा। यतः—

आज्ञाभंगकरान्राजा न क्षमेत्स्वसुतानपि।
विशेषः को नु राज्ञश्च राज्ञश्चित्रगतस्य च॥ ४५॥

भ्रातः, सर्वथाऽस्मद्वचनं क्रियताम्। व्यवहारोऽप्यस्माभिः कृत एव। अयं संजीवकः सस्यभक्तकोऽर्थाऽधिकारे नियुज्यताम्'। एतद्वचनात्तथानुष्ठिते सति तदारभ्य पिंगलकसंजीवकयोः सर्वबन्धुपरित्यागेन महता स्नेहेन कालोऽतिवर्तते। ततोऽनुजीविनामप्याहारदाने शैथिल्यदर्शनाद्द्‍ दमनककरटकावन्योऽन्यं चिन्तयतः। तत्राऽऽह दमनकः करटकम्—'मित्र, किं कर्तव्यम्। आत्मकृतोऽयं दोषः। स्वयं कृतेऽपि दोषे परिदेवनमप्यनुचितम्। (क्षणं विमृश्य) मित्र यथाऽनयोः सौहार्दं मयाकारितं तथा भेदोऽपिमया कार्यः।

---

१. अहल्योपर्यन्त्। ३। १। १२४। इतिण्यत्।

निसर्गः। काकी। कनकसूत्रम्। सततम्। सोढः।

---

करटको ब्रूते—अस्त्वेवम्। किंत्वनयोर्महानन्योऽन्य निसर्गो॑पजातस्नेहः कथं भेदयितुं शक्यः। दमनको ब्रूते—उपायः क्रियताम्। तथा चोक्तम्—

उपायेन हि यच्छक्यं न तच्छक्यं पराक्रमैः।
काक्या कनकसूत्रेण कृष्णसर्पो निपातितः॥ ४६॥

करटकः पृच्छति—कथमेतत्। दमनकः कथयति—

कथा ५।

कस्मिंश्चित्तरौ वायसदंपती निवसतः। तयोश्चापत्यानि तत्कोटराऽवस्थितेन कृष्णसर्पेण खादितानि। ततः पुनर्गर्भवती वायसी वायसमाह 'नाथ, त्यज्यतामयं तरुः। अत्राऽवस्थित-कृष्णसर्पेणाऽऽवयोः संततिः सततं भक्ष्यते। यतः—

दुष्टा भार्या शठं मित्रं भृत्यश्चोत्तरदायकः।
ससर्पे च गृहे वासो मृत्युरेव न संशयः'॥ ४७॥

वायसो ब्रूते—प्रिये, न भेतव्यम्। वारंवारं मयैतस्य महाऽपराधः सोढः। इदानीं पुनर्न क्षन्तव्यः। वायस्याह—'अलमनया शंकया। यतः—

---

१. संहिता प्रष्टव्या।

२. षह–मर्षण इत्यस्मात् क्तः। होढः। ८। २। ३१। इति हस्य ढः। ढोढेलोपः। ८। ३। १३। इतिढलोपे। सहिवहोरोदवर्णस्य। ६। ३। ११२। इत्यवर्णस्योत्।

विज्ञप्तः । उपढौकयामः । विनीतिः ।
पञ्चत्वम् । शपथम् ।

---

बुद्धिर्यस्य बलं तस्य निर्बुद्धेस्तु कुतो बलम् ।
पश्य सिंहो मदोन्मत्तः शशकेन निपातितः' ॥ ४८ ॥

वायसी विहस्याऽऽह—कथमेतत्' । वायसः कथयति—

## कथा ६ ।

अस्ति मन्दरनाम्नि पर्वते दुर्दान्तो नाम सिंहः । स च सर्वदा पशूनां वधं कुर्वन्नास्ते । ततः सर्वैः पशुभिर्मिलित्वा स सिंहो विज्ञप्तः–'मृगेन्द्र, किमर्थमेकदा बहुपशुघातः[1] क्रियते । यदि प्रसादो भवति तदा वयमेव भवतामाहाराय प्रत्यहमेकं पशुमुपढौकयामः[2] । ततः सिंहेनोक्तम् । यद्येतदभिमतं भवतां तर्हि भवतु तत्' । ततः प्रभृत्येकैकं पशुमुपकल्पितं भक्षयन्नास्ते । अथ कदाचिद्वृद्धशशकस्य वारः समायातः । सोऽचिन्तयत्—

'त्रासहेतोर्विनीतिस्तु क्रियते जीविताशया ।
पञ्चत्वं चेद्गमिष्यामि किं सिंहानुनयेन मे ॥ ४९ ॥

तन्मन्दंमन्दं गच्छामि । ततः सिंहोऽपि क्षुधापीडितः कोपात् तमुवाच—'कुतस्त्वं विलम्ब्य समागतोऽसि । शशकोऽब्रवीत्—'देव, नाहमपराधी आगच्छन्पथि सिंहान्तरेण बलाद्धृतः । तस्याग्रे पुनरागमनाय शपथं कृत्वा स्वामिनं निवेदयितुमत्रागतोऽस्मि ।

---

१. सन्धिविभागः कार्यः
२. ण्यन्ताद्–ढौकृ गताविति धातो र्लटिरूपम् ।

विम्बम् । आध्मातः । निहितम् ।

विधृत्य । आत्ययिकम् ।

---

सिंहः सकोपमाह— सत्वरं गत्वा दुरात्मानं दर्शय क्व स दुरात्मा तिष्ठति '। ततः शशकस्तं गृहीत्वा सपदि गत्वा कूपमेकमाजगाम । तत्राऽऽगत्य 'स्वयमेव पश्यतु स्वामीत्युक्त्वा तस्मिन्कूपजले तस्य सिंहस्यैव बिम्बं दर्शितवान् । ततोऽसौ क्रोधाध्मातो दर्पात्तस्योपर्यात्मानं निक्षिप्य पञ्चत्वं गतः । अतोऽहं ब्रवीमि—बुद्धिर्यस्य, इत्यादि ॥ वायस्याह—'श्रुतं मया सर्वम् । संप्रति यथा कर्तव्यं तद्ब्रूहि । वायसोऽवदत्—'अत्राऽऽसन्ने सरसि[1] राजपुत्रः प्रत्यहमागत्य स्नाति[2] । स्नानसमये तदङ्गादवतारितं तीर्थशिलानिहितं कनकसूत्रं चञ्च्वा विधृत्याऽऽनीयाऽस्मिन्कोटरे धारयिष्यसि' । अथ कदाचित्स्नातुं जलं प्रविष्टे राजपुत्रे वायस्या तदनुष्ठितम् । अथ कनकसूत्राऽनुसरणप्रवृत्तै[3] राजपुरुषैस्तत्र तरुकोटरे कृष्णसर्पो दृष्टो व्यापादितश्च । अतोऽहंब्रवीमि— 'उपायेन हि यच्छक्यम्' इत्यादि ॥ करटको ब्रूते—यद्येवं तर्हि गच्छ । शिवास्ते सन्तु पन्थानः' । ततो दमनकः पिङ्गलकसमीपं गत्वा प्रणम्योवाच—'देव, आत्ययिकं किमपि महाभयकारि कार्यं मन्यमानः समागतोऽस्मि । यतः—

आपद्युन्मार्गगमने कार्यकालात्ययेषु च ।
कल्याणवचनं ब्रूयादपृष्टोऽपि हितं नरः ॥ ५० ॥

---

१. सप्तम्या एकवचनम् ।

२. ष्णा-शौचे लटि ।

३. रोरि । ८ । ३ । १४ । इति रेफस्यलोपः ।

अत्युच्छ्रिते । विष्टभ्य । उपतिष्ठते । श्रयते ।

अन्यच्च ।

भोगस्य भाजनं राजा न राजा कार्यभाजनम् ।
राजकार्यपरिध्वंसी मन्त्री दोषेण लिप्यते ॥ ५१ ॥

तथा हि पश्य । अमात्यानामेष क्रमः ।

वरं प्राणपरित्यागः शिरसो वापि कर्तनम् ।
न तु स्वामिपदावाप्तिपातकेच्छोरुपेक्षणम् ॥ ५२ ॥

पिङ्गलकः सादरमाह—'अथ भवान्किं वक्तुमिच्छति'। दमनको ब्रूते—'देव, संजीवकस्तवोपर्यसदृशव्यवहारीव लक्ष्यते। यथा चाऽस्मत्संनिधाने श्रीमद्देवपादानां शक्तित्रयनिन्दां कृत्वा राज्यमेवाऽभिलषति'। एतच्छ्रुत्वा पिङ्गलकः सभयं साश्चर्यं मत्वा तूष्णीं स्थितः। दमनकः पुनराह— 'देव, सर्वामात्यपरित्यागं कृत्वैक एवायं यस्त्वया सर्वाधिकारीकृतः स एव दोषः। यतः—

अत्युच्छ्रिते मन्त्रिणि पार्थिवे च
विष्टभ्य पादावुपतिष्ठते[२] श्रीः ।
सा स्त्रीस्वभावादसहा भरस्य
तयोर्द्वयोरेकतरं जहाति ॥ ५३ ॥

अपरं च ।

एकं भूमिपतिः करोति सचिवं राज्ये प्रमाणं यदा
तं मोहाच्छ्रयते मदः स च मदालस्येन निर्भिद्यते ।

---

१. सन्धि विभागः ।

२ अकर्मकाच्च । १ । ३ । २६ । इत्यु पातिष्ठते रकर्मका दात्मने पदम् ।

**विषदिग्धस्य । भक्तस्य । उद्धरणम् । व्यलीकानि ।**
**कायः । वल्लभः । आरोपयति ।**

---

निर्भिन्नस्य पदं करोति हृदये तस्य स्वतन्त्रस्पृहा
स्वातन्त्र्यस्पृहया युतः स नृपतेः प्राणान्तिकं द्रुह्यति ॥५५॥

अन्यच्च—

विषदिग्धस्य भक्तस्य दन्तस्य चलितस्य च ।
अमात्यस्य च दुष्टस्य मूलादुद्धरणं सुखम् ॥ ५६ ॥

यतः—

स हि सर्वकार्येषु स्वेच्छातः प्रवर्तते । तदत्रप्रमाणं स्वामी ।

एतच्च भवान् जानात्येव यत् 'न सोऽस्ति पुरुषो लोके यो न कामयते श्रियम्' इति ।

सिंहो विमृश्याह—'भद्र' यद्यप्येवं तथापि संजीवकेन सह मम महान्स्नेहः । पश्य—

कुर्वन्नपि व्यलीकानि यः प्रियः प्रिय एव सः ।
अशेषदोषदुष्टोऽपि कायः कस्य न वल्लभः ॥ ५७ ॥

अन्यच्च—

अप्रियाण्यपि कुर्वाणो यः प्रियः प्रिय एव सः ।
दग्धमन्दिरसारेऽपि कस्य वह्नावनादरः ॥ ५८ ॥

दमनकः पुनरेवाह—'देव, स एवाऽतिदोषः' । यतः—

यस्मिन्नेवाऽधिकं चक्षुरारोपयति पार्थिवः ।
सुतेऽमात्येऽप्युदासीने स लक्ष्म्याऽऽश्रीयते जनः ॥ ५९ ॥

पथ्यस्य । अपायः । पुरस्कृतः । आर्जवं । स्वेदनम् ।
अभ्यञ्जनम् । नामितम् । अर्दितः ।

---

शृणु देव—

अप्रियस्यापि पथ्यस्य परिणामः सुखावहः ।
वक्ता श्रोता च यत्रास्ति रमन्ते तत्र संपदः ॥ ६० ॥

त्वया च मूलभृत्यानपास्य अयमागन्तुकः पुरस्कृतः । एतच्च अनुचितं कृतम् । यतः—

मूलभृत्यान्परित्यज्य नाऽऽगन्तून्प्रतिमानयेत् ।
नाऽतः परतरो दोषो राज्यभेदकरो यतः ॥ ६१ ॥

सिंहो ब्रूते—'किमाश्चर्यम् । मया यदभयवाचं दत्त्वाऽऽनीतः संवर्धितश्च तत्कथं मह्यं[1] द्रुह्यति' । दमनको ब्रूते—'देव,

दुर्जनो नाऽऽर्जवं याति सेव्यमानोऽपि नित्यशः ।
स्वेदनाभ्यञ्जनोपायैः श्वपुच्छमिव नामितम् ॥ ६२ ॥

अतोऽहं ब्रवीमि—

अपृष्टोऽपि हितं ब्रूयाद्यस्य नेच्छेत्पराभवम् ।
एष एव सतां धर्मो विपरीतमतोऽन्यथा ॥ ६३ ॥

यदि संजीवकव्यसनाऽर्दितो विज्ञापितोऽपि स्वामी, न निवर्तते तदीदृशि भृत्ये न दोषः ।

---

१. क्रुधद्रुहेर्ष्यासूयार्थानां यंप्रतिकोपः । १ । ४ । ३७ । इति सम्प्रदान-संज्ञायां—चतुर्थी सम्प्रदाने । २ । ३ । १३ । इति चतुर्थी ।

निग्रहः। न्यस्तः। मनाक्। अश्वतरी।

---

पिंगलकः (स्वगतम्।)

न परस्याऽपराधेन परेषां दण्डमाचरेत्।
आत्मनाऽवगतं कृत्वा बध्नीयात्पूजयेच्च वा॥ ६४॥

तथा चोक्तम्।

गुणदोषावनिश्चित्य विधिर्न ग्रहनिग्रहे।
स्वनाशाय यथा न्यस्तो दर्पात्सर्पमुखे करः॥ ६५॥

प्रकाशं ब्रूते—'तदा संजीवकः किं प्रत्यादिश्यताम्। दमनकः ससंभ्रममाह— देव, मा मैवम्। एतावता मन्त्रभेदो जायते। तथा ह्युक्तम्—

मन्त्रबीजमिदं गुप्तं रक्षणीयं यथा तथा।
मनागपि न भिद्येत तद्भिन्नं न प्ररोहति॥ ६६॥

किं च—

आदेयस्य प्रदेयस्य कर्तव्यस्य च कर्मणः।
क्षिप्रमक्रियमाणस्य कालः पिबति तद्रसम्॥ ६७॥

तदवश्यं समारब्धं महता प्रयत्नेन संपादनीयम्। यच्चासौ दृष्टदोषोऽपि दोषान्निवर्त्य संधातव्यस्तदतीवानुचितम्। यतः—

सकृद्दुष्टं तु यो मित्रं पुनः संधातुमिच्छति।
स मृत्युमेव गृह्णाति गर्भमश्वतरी तथा॥ ६८॥

सिंहो ब्रूते— 'ज्ञायतां तावत्किमस्माकमसौ कर्तुं समर्थः'। दमनक आह—'देव,

**अङ्गाङ्गिभावः । टिट्टिभः ।**
**आसन्नप्रसवा । विग्रहीतव्यः । कृच्छ्रेण । सीदति ।**

---

अंगाङ्गिभावमज्ञात्वा[1] कथं सामर्थ्यनिर्णयः ।
पश्य टिट्टिभमात्रेण समुद्रो व्याकुलीकृतः[2] ॥ ६९ ॥

सिंहः पृच्छति—'कथमेतत्' दमनकः कथयति—

## कथा ७ ।

दक्षिणसमुद्रतीरे टिट्टिभदंपती[3] निवसतः । तत्र चाऽऽसन्नप्रसवा टिट्टिभी भर्तारमाह—'नाथ, प्रसवयोग्यस्थानं निभृतमनुसंधीयताम्' इति ।

टिट्टिभोऽवदत् भार्ये, नन्विदमेव स्थानं प्रसूतियोग्यम् । सा ब्रूते—'समुद्र वेलया व्याप्यते स्थानमेतत्' । टिट्टिभोऽवदत्—'किमहं निर्बलः ? समुद्रेण विग्रहीतव्यः ? टिट्टिभी विहस्याऽऽह—स्वामिन्, त्वया समुद्रेण च महदन्तरम् । अथवा ।

पराभवं परिच्छेत्तुं योग्याऽयोग्यं च वेत्ति यः ।
अस्तीह यस्य विज्ञानं कृच्छ्रेणाऽपि न सीदति ॥ ७० ॥

**अपि च ।**

अनुचितकार्यारम्भः स्वजनविरोधो बलीयसा स्पर्धा ।
प्रमदाजनविश्वासो मृत्योर्द्वाराणि चत्वारि ॥ ७१ ॥

---

१. अङ्गञ्च-अङ्गीच-अङ्गाङ्गिनौ-अङ्गाऽङ्गिनोर्भावोऽङ्गाङ्गिभावस्तम् ।
२. अभूततद्भावे कृभ्वस्तियोगेसम्पद्यकर्तरिच्विः इतिच्विः ५ । ४ । ५० । तस्यलोपेच अस्यच्वौ ७ । ४ । ३२ । इती त्वम् ।
३. जायाच पतिश्चेति द्वन्द्वे जाया शब्दस्य दमा देशः ।

प्रसूता । निगृहीतः गरुत्मान् । मौलिः ।

---

ततः कृच्छ्रेण स्वामिवचनात्सा तत्रैव प्रसूता । एतत्सर्वं श्रुत्वा समुद्रेणाऽपि तच्छक्तिज्ञानार्थं तदण्डान्यपहृतानि । ततः टिट्टिभी शोकार्ता भर्तारमाऽऽह—'नाथ, कष्टमापतितम् । तान्यण्डानि मे नष्टानि' । टिट्टिभोऽवदत्—'प्रिये, मा भैषीः' । इत्युक्त्वा पक्षिणां मेलकं कृत्वा पक्षिस्वामिनो गरुडस्य समीपं गतः । तत्र गत्वा सकलवृत्तान्तं टिट्टिभेन भगवतो गरुडस्य पुरतो निवेदितम्—'देव, समुद्रेणाऽहं स्वगृहाऽवस्थितो विनाऽपराधेनैव निगृहीतः' । ततस्तद्वचनमाकर्ण्य गरुत्मता[1] प्रभुर्भगवान्नारायणः सृष्टिस्थितिप्रलयहेतुर्विज्ञप्तः । स समुद्रमण्डदानायाऽऽदिदेश । ततो भगवदाज्ञां मौलौ निधाय समुद्रेण तान्यण्डानि टिट्टिभाय समर्पितानि । अतोऽहं ब्रवीमि—'अङ्गाङ्गिभावमज्ञात्वा' इत्यादि ॥ राजाह—'कथमसौ ज्ञातव्यो द्रोहबुद्धिरिति' । दमनको ब्रूते—'यदाऽसौ सदर्पः शृङ्गाग्रप्रहरणाभिमुखश्चकित इवाऽऽगच्छति तदा ज्ञास्यति स्वामी' । एवमुक्त्वा संजीवकसमीपं गतः । तत्र गतश्च मन्दं मन्दमुपसर्पन्विस्मितमिवात्मानमदर्शयत् । संजीवकेन सादरमुक्तम्[2]—'भद्रं, कुशलं ते' । दमनको ब्रूते—अनुजीविनां कुतः कुशलम् । यतः ।

---

१. गरुत्-अस्त्यस्येति गरुत्मान् । तदस्यास्त्यस्मिन्निति मतुप् । ५ । २ । ९४ । इति । यवादिभ्वा न्मतोर्मस्य वोन ।

२. आदरेणां सहेति सादरम् । सहस्य सः ।

अनिर्वृतम् । पयोराशिः । मुग्धः । सुनिभृतम् ।
प्रत्ययः । रहसि ।

---

संपत्तयः पराधीनाः सदा चित्तमनिर्वृतम् ।
स्वजीवितेऽप्यविश्वासस्तेषां ये राजसेवकाः ॥ ७२ ॥

संजीवकेनोक्तम्—'सखे, ब्रूहि किमेतत्' । दमनक आह—'किं ब्रवीमि मन्दभाग्यः । पश्य ।

मज्जन्नपि पयोराशौ लब्ध्वा सर्पावलम्बनम् ।
न मुञ्चति न चादत्ते तथा मुग्धोऽस्मि संप्रति ॥ ७३ ॥

यतः ।

एकत्र राजविश्वासो नश्यत्यन्यत्रबान्धवः ।
किं करोमि क्व गच्छामि पतितो दुःखसागरे' ॥ ७४ ॥

इत्युक्त्वा दीर्घं निःश्वस्योपविष्टः । संजीवको ब्रूते—मित्र, तथापि सविस्तरं मनोगतमुच्यताम्' । दमनकः सुनिभृतमाह—'यद्यपि राजविश्वासो न कथनीयस्तथापि भवानस्मदीयप्रत्ययादागतः । मया परलोकार्थिनावश्यं तव हितमाख्येयम् । शृणु । अयं स्वामी तवोपरिविकृतबुद्धी रहस्युक्तवान्— 'संजीवकमेव हत्वा स्वपरिवारं तर्पयामि' । एतच्छ्रुत्वा संजीवकः परं विषादमगमत् । दमनकः पुनराह—'अलं विषादेन । प्राप्तकालं कार्य्यमनुष्ठीयताम्' । संजीवकः क्षणं विमृश्याह स्वगतम्—'सुष्ठु खल्विदमुच्यते । किं वा दुर्जनचेष्टितं न वेत्येतद्व्यवहारान्निर्णेतुं न शक्यते ।

---

१. पयसां राशिः पयोराशिस्तस्मिन् ।

कुतः—

( धर्मश्रद्धा विद्वांसः ? ) प्रायेणाऽपात्रभृद्भवति राजा ।
कृपणाऽनुसारि च धनं देवो गिरिजलधिवर्षी च ॥ ७५ ॥

ततो विचिन्त्योक्तम् । कष्टं किमिदमापतितम् । यतः ।

आराध्यमानो नृपतिः प्रयत्ना-
न्न तोषमायाति किमत्र चित्रम् ।
अयं त्वपूर्वप्रतिमाविशेषो-
यः सेव्यमानो रिपुतामुपैति ॥ ७६ ॥

तदयमशक्यार्थः प्रमेयः । यतः—

निमित्तमुद्दिश्य हि यः प्रकुप्यति
ध्रुवं स तस्याऽपगमे प्रसीदति ।
अकारणद्वेषि तु यस्य मानसं
कथं जनस्तं परितोषयिष्यति ॥ ७७ ॥

किं मयाऽपकृतं राज्ञः । अथवा निर्निमित्ताऽपकारिणश्च भवन्ति राजानः' । दमनको ब्रूते—'एवमेतत् । शृणु ।

विज्ञैः स्निग्धैरुपकृतमपि द्वेष्यतामेति कैश्चि-
त्साक्षादन्यैरपकृतमपि प्रीतिमेवोपयाति ।
चित्रं चित्रं किमथ चरितं नैकभावाश्रयाणां
सेवाधर्मः परमगहनो योगिनामप्यगम्यः ॥ ७८ ॥

अयं तावत्स्वामी वाचि मधुरो विषहृदयश्चेति ज्ञातः । यतः ।

उच्छ्रित पाणिः । प्रोत्सारितः । मायापटुः ।
पोतः । निर्वातः सृणिः । धाता । विकारितः । वज्रम् ।

---

दूरादुच्छ्रितपाणिरार्द्रनयनः प्रोत्सारितार्धासनो-
गाढालिंगनतत्परः प्रियकथाप्रश्नेषु दत्तादरः ।
अन्तर्भूतविषो बहिर्मधुमयश्चाऽतीव मायापटुः
को नामायमपूर्वनाटकविधिर्यः शिक्षितो दुर्जनैः ॥ ७९ ॥

तथा हि ।

पोतो दुस्तरवारिराशितरणे, दीपोऽन्धकारागमे,
निर्वाते व्यजनं, मदान्धकरिणां दर्पोपशान्त्यै सृणिः ।
इत्थं तद्भुवि नास्ति यस्य विधिना नोपायचिन्ता कृता
मन्ये दुर्जनचित्तवृत्तिहरणे धातापि भग्नोद्यमः' ॥ ८० ॥

संजीवकः पुनर्निःश्वस्य—'कष्टं भोः । कथमहं सस्यभक्षकः सिंहेन निपातयितव्यः । यतः—

ययोरेव समं वित्तं ययोरेव समं बलम् ।
तयोर्विवादो मन्तव्यो नोत्तमाधमयोः क्वचित् ॥ ८१ ॥

( पुनर्विचिन्त्य । ) न जाने केनायं राजा ममोपरि विकारितः । भेदमुपगताद्राज्ञः सदा भेतव्यम् ।

वज्रं च राजतेजश्च द्वयमेवातिभीषणम् ।
एकमेकत्र पतति पतत्यन्यत्समन्ततः ॥ ८२ ॥

ततः संग्रामे मृत्युरेव वरम् । इदानीं तदाज्ञानुवर्तनमयुक्तम् । यतः—

कायः । रणम् । जिघांसुः । उन्नतलांगूलः ।
विवृतास्यः । निष्पन्नम् । दृप्यति ।

---

मृतः प्राप्नोति वा स्वर्गं शत्रुं हत्वा सुखानि वा ।
उभावपि हि शूराणां गुणावेतौ सुदुर्लभौ ॥ ८३ ॥

**युद्धकालश्चायम् ।**

यत्राऽयुद्धे ध्रुवं मृत्युर्युद्धे जीवितसंशयः ।
तमेव कालं युद्धस्य प्रवदन्ति मनीषिणः ॥ ८४ ॥

**यतः ।**

जये हि लभते लक्ष्मीं मृतेनाऽपि परंपदम् ।
क्षणविध्वंसिनः कायाः का चिन्ता मरणे रणे'[1] ॥ ८५ ॥

**एतच्चिन्तयित्वा संजीवक आह—'भो मित्र, कथमसौ मां जिघांसुर्ज्ञातव्यः' दमनको ब्रूते—यदासौ पिङ्गलकः समुन्नत-लाङ्गल उन्नतचरणो विवृताऽऽस्यस्त्वां पश्यति तदा त्वमेव स्वविक्रमं दर्शयिष्यसि । किंतु सर्वमेतत्सुगुप्तमनुष्ठातव्यम् । नोचेन्न त्वं नाहम् ।' इत्युक्त्वा दमनकः करटकसमीपं गतः । करटकेनोक्तम्—'किं निष्पन्नम् ।' दमनकेनोक्तम्—'निष्पन्नो' ऽसावन्योन्यभेदः । करटको ब्रूते—कोऽत्र सन्देहः । यतः ।**

बन्धुः को नाम दुष्टानां कुप्यते को न याचितः ।
को न दृप्यति वित्तेन कुकृत्ये को न पण्डितः ॥ ८६ ॥

---

१. अतोरोरप्लुतादप्लुते । ६ । १ । ११३ इतिरोरुत्वेआद्गुणः । ६ । १ । ८७ । इतिगुणेच एङः पदान्तादति । ६ । १ । १०९ । इति पूर्वरूपम् ।

सञ्जीभूय । विकृताकारः । दारुणम् ।
अरातिः । भूतिः ।

---

ततो दमनकः पिङ्गलकसमीपं गत्वाऽऽह—देव, समागतोऽसौ पापाऽऽशयः । ततः सञ्जीभूय स्थीयताम्' इत्युक्त्वा पूर्वोक्ताऽऽकारं कारयामास । सञ्जीवकोऽप्यागत्य तथाविधं विकृताकारं सिंहं दृष्ट्वा स्वानुरूपं विक्रमं चकार ततस्तयोर्युद्धे सञ्जीवकः सिंहेन व्यापादितः ।

अथ सञ्जीवकं सेवकं पिङ्गलको व्यापाद्य विश्रान्तः सशोक इव तिष्ठति । ब्रूते च—'किं मया दारुणं कर्म कृतम् । यतः—

परैः संभुज्यते राज्यं स्वयं पापस्य भाजनम् ।
धर्मातिक्रमतो राजा सिंहो हस्तिवधादिव ॥ ८७ ॥

अपरं च—

भूम्येकदेशस्य गुणाऽन्वितस्य
भृत्यस्य वा बुद्धिमतः प्रणाशः ।
भृत्यप्रणाशो मरणं नृपाणां
नष्टाऽपि भूमिः सुलभा न भृत्याः' ॥ ८८ ॥

दमनको ब्रूते—'स्वामिन्, कोऽयं नूतनो न्यायो यदरातिं हत्वा सन्तापः क्रियते । तथा चोक्तम्—

पिता वा यदि वा भ्राता पुत्रो वा यदि वा सुहृत् ।
प्राणच्छेदकरा राज्ञा हन्तव्या भूतिमिच्छता ॥ ८९ ॥

निलयः । खलः । कालाकृष्टाः ।

---

इति दमनकेन सन्तोषितः पिङ्गलकः स्वां प्रकृतिमापन्नः सिंहासने समुपविष्टः । दमनकः प्रहृष्टमनाः 'विजयतां महाराजः । शुभमस्तु सर्वजगताम्' इत्युक्त्वा यथासुखमवस्थितः ॥

विष्णुशर्मोवाच— 'सुहृद्भेदः श्रुतस्तावद्भवद्भिः ।' राजपुत्रा ऊचुः— 'भवत्प्रसादाच्छ्रुतः, सुखिनो भूता वयम्' । विष्णुशर्माऽब्रवीत्—अपरमपीदमस्तु—

सुहृद्भेदस्तावद्भवतु भवतां शत्रुनिलये
खलः कालाऽऽकृष्टः[1] प्रलयमुपसर्पत्वहरहः[2] ।
जनो नित्यं भूयात्सकलसुखसम्पत्तिवसतिः
कथाऽऽरम्भे रम्ये सततमिह बालोऽपि रमताम् ॥ ६० ॥

## इति हितोपदेशे सुहृद्भेदो नाम द्वितीयः कथासङ्ग्रहः समाप्तः ।

---

१. ष्टुनाष्टुः । ८ । ४ । ४१ । इति तवर्गस्यटवर्गः ।

२. रोऽसुपि । ८ २ । ३९ । इत्यह्नोरेफादेशः ।

३. आशीर्लिङि ।

विग्रहः । अकर्णधारा । विप्लवेत ।

---

## विग्रहः ।

पुनः कथाऽऽरम्भकाले राजपुत्रा ऊचुः— 'आर्य, राजपुत्रा[1] वयम् । तद्विग्रहं श्रोतुं नः[2] कुतूहलमस्ति ।' विष्णुशर्मणोक्तम् 'यद्येवंभवद्भ्यो[3] रोचते कथयामि । विग्रहः श्रूयतां यस्याऽयमाद्यः श्लोकः—

> हंसैः सह मयूराणां विग्रहे तुल्यविक्रमे ।
> विश्वास्य वञ्चिता हंसाः काकैः स्थित्वाऽरिमन्दिरे ॥ १ ॥

राजपुत्रा ऊचुः—'कथमेतत् ।' विष्णुशर्मा कथयति—

अस्ति कर्पूरद्वीपे पद्मकेलिनामधेयं सरः । तत्र हिरण्यगर्भो नाम राजहंसः प्रतिवसति । स च सर्वैर्जलचरपक्षिभिर्मिलित्वा पक्षिराज्येऽभिषिक्तः ।

> यदि न स्यान्नरपतिः सम्यङ्नेता ततः प्रजा ।
> अकर्णधारा जलधौ विप्लवेतेह नौरिव ॥ २ ॥

अपरं च ।

---

१. भो भगो अघो अपूर्वस्य योऽशि । ८ । ३ । १७ । इति यादेशेतस्यहलि सर्वेषाम् , ८ । ३ । २२ । इतिलोपः ।

२. षष्ठया बहुवचने-बहुवचनस्य वस्नसौ । ८ । १ । २१ । इति नसादेशः ।

३. रुच्यर्थानां प्रीयमाणः । १ । ४ । ३३ । इति संप्रदानसंज्ञायाम्-चतुर्थी सम्प्रदाने । २ । ३ ३३ । इति चतुर्थी ।

गिरिः । दग्धारण्यम् । अनुचरः ।
कौतुकात् । मरुस्थले ।

---

प्रजां संरक्षति नृपः सा वर्धयति पार्थिवम् ।
वर्धनाद्रक्षणं श्रेयस्तदभावे तदप्यसत् ॥ ३ ॥

एकदाऽसौ राजहंसः सुविस्तीर्णकमलपर्यङ्के सुखाऽऽसीनः परिवारपरिवृतस्तिष्ठति । ततः कुतश्चिद्देशादागत्य दीर्घमुखो नाम बकः प्रणम्योपविष्टः । राजोवाच— दीर्घमुख, देशान्तरादागतोऽसि वार्तां कथय ।' स ब्रूते—देव, अस्ति महती वार्ता । तां वक्तुं सत्वरमागतोऽहम् । श्रूयताम् । अस्ति जम्बूद्वीपे विन्ध्यो नाम गिरिः । तत्र चित्रवर्णो नाम मयूरः पक्षिराजो निवसति । तस्याऽनुचरैश्चरद्भिः पक्षिभिरहं दग्धाऽरण्यमध्ये चरन्नवलोकितः पृष्टश्च—'कस्त्वम् । कुतः समागतोऽसि ।' तदा मयोक्तम्—कर्पूरद्वीपस्य राजचक्रवर्तिनो हिरण्यगर्भस्य राजहंसस्याऽनुचरोऽहम् । कौतुकाद्देशान्तरं द्रष्टुमायातोऽस्मि । एतच्छ्रुत्वा पक्षिभिरुक्तम्- अनयोर्देशयोः को देशो भद्रतरो राजा च ।' मयोक्तम्—'आः किमेवमुच्यते । महदन्तरम् । यतः कर्पूरद्वीपः स्वर्ग एव राजहंसश्च द्वितीयः स्वर्गपतिः । अत्र मरुस्थले

---

१. राजाहःसखिभ्यष्टच् । ५ । ४ । ९१ । इति टचिसति नस्तद्धिते । ६ । ४ । १४४ । इति टिलोपः ।

२. द्विवचनविभज्योपपदे तरबीयसुनौ । ५ । ३ ५७ । इति तरप् ।

भुजङ्गाः । शाल्मली । नीडः । नीलपटलम् ।
नभस्तलः । धारासारः

---

पतिता यूयं किं कुरुथ । अस्मद्देशे गम्यताम् ।' ततोऽस्मद्वचनमाकर्ण्य सर्वे सकोपा बभूवुः । तथा चोक्तम्—

पयः पानं भुजङ्गानां केवलं विषवर्धनम् ।
उपदेशो हि मूर्खाणां प्रकोपाय न शान्तये ॥ ४ ॥

अन्यच्च ।

विद्वानेवोपदेष्टव्यो नाविद्वांस्तु कदाचन ।
वानरानुपदिश्याऽथ स्थानभ्रष्टा ययुः खगाः' ॥ ५ ॥

राजोवाच—कथमेतत् ।' दीर्घमुखः कथयति—

## कथा १

अस्ति नर्मदातीरे विशालः शाल्मलीतरुः । तत्र निर्मितनीडक्रोडे पक्षिणो निवसन्ति सुखेन । अथैकदा वर्षासु नीलपटलैरावृते नभस्तले धाराऽऽसारैर्महती वृष्टिर्बभूव । ततो वानरांश्च तरुतलेऽवस्थिताञ्छीताकुलान्कम्पमानानवलोक्य कृपया पक्षिभिरुक्तम्—भो भो वानराः, शृणुत ।

अस्माभिर्निर्मिता नीडाश्चञ्चुमात्राहृतैस्तृणैः ।
हस्तपादादिसंयुक्ता यूयं किमिति सीदथ[३] ॥ ६ ॥

---

१. अस्माकं देश इत्य स्मद्देशस्तस्मिन् ।

२. या धातो लिटि बहुवचने ।

३. पाघ्राध्मास्थाम्नादाण्दृश्यर्तिसर्तिशद्सदां पिब जिघ्र धम तिष्ठ मन यच्छ पश्यर्च्छधौशीय सीदाः । ७ । ३ । ७८ । इति शदः सीदादेशः ।

सीदथ। आमर्षः। समीक्ष्य। द्वीपी।

---

तच्छ्रुत्वा वानरैर्जाताऽमर्षैरालोचितम्—'अहो निर्वातनीडगर्भाऽवस्थिताः सुखिनः पक्षिणोऽस्मान्निन्दन्ति। भवतु तावद्वृष्टेरुपशमः। अनन्तरं शान्ते पानीयवर्षे तैर्वानरैर्वृक्षमारुह्य सर्वे नीडा भग्नास्तेषामण्डानिचाऽधः पातितानि। अतोऽहं ब्रवीमि—विद्वानेवोपदेष्टव्यः' इत्यादि॥ राजोवाच—

'ततस्तैः किं कृतम्। वकः कथयति—ततस्तैः पक्षिभिः कोपादुक्तम्—'केनाऽसौ राजहंसो राजा कृतः।' ततो मयोपजातकोपेनोक्तम्—युष्मदीयो मयूरः केन राजा कृतः।' एतच्छ्रुत्वा ते सर्वे मां हन्तुमुद्यताः। ततो मयाऽपि स्वविक्रमो दर्शितः।

राजा विहस्याऽऽह—

आत्मनश्च परेषां च यः समीक्ष्य बलाऽबलम्।
अन्तरं नैव जानाति स तिरस्क्रियतेऽरिभिः॥ ७॥

अन्यच्च।

सुचिरं हि चरन्नित्यं क्षेत्रे सस्यमबुद्धिमान्।
द्वीपिचर्मपरिच्छन्नो वाग्दोषाद्गर्दभो हतः' ॥ ८॥

वकः पृच्छति—'कथमेतत्।' राजा कथयति—

---

१. त्यदादीनिच। १। १। ७४। इति वृद्धसंज्ञायाम्—वृद्धाच्छः। ४। २। ११४। इति छः। तस्यच—आयनेयीनीयियः फढखछघां प्रत्ययादीनाम्। ७। १। २। इतीयादेशः।

परिच्छन्नः । मुमूर्षुः । प्रच्छाद्य ।
धूसरः । धनुः काण्डम् । सज्जीकृत्य । लीलया ।
मृदुः । अक्षमः ।

---

## कथा २ ।

अस्ति हस्तिनापुरे विलासो नाम रजकः । तस्य गर्दभोऽतिवाहनाद्दुर्बलो [1]मुमूर्षुरिवाऽभवत् । ततस्तेन रजकेनाऽसौ व्याघ्रचर्मणा प्रच्छाद्याऽरण्यसमीपे सस्यक्षेत्रे नियुक्तः । ततो दूरात्तमवलोक्य व्याघ्रबुद्ध्या क्षेत्रपतयः सत्वरं पलायन्ते । अथैकदा केनाऽपि सस्यरक्षकेण धूसरकम्बलकृततनुत्राणेन धनुः काण्डं सज्जीकृत्याऽऽनतकायेनैकान्ते स्थितम् । तं च दूराद्दृष्ट्वा गर्दभः पुष्टाङ्गो यथेष्टसस्यभक्षणजातबलो गर्दभोऽयमिति मत्वोच्चैः शब्दं कुर्वाणस्तदभिमुखं धावितः । सस्यरक्षकेण चीत्कारशब्दान्निश्चित्य गर्दभोऽयमिति लीलयैव व्यापादितः । अतोऽहं ब्रवीमि— 'सुचिरं हि चरन्नित्यम्' इत्यादि ॥ दीर्घमुखो ब्रूते—ततः पक्षिभिरुक्तम्—'अरे पाप दुष्ट बक, अस्माकं भूमौ चरन्नस्माकं स्वामिनमधिक्षिपसि । तन्न क्षन्तव्यमिदानीम्' इत्युक्त्वा सर्वे मां चञ्चुभिर्हत्वा सकोपा ऊचुः—'पश्य रे मूर्ख, स हंसस्तव राजा सर्वथा मृदुः । तस्य राजाधिकारो नास्ति । [2]यत एकान्तमृदुः करतलस्थमप्यर्थं रक्षितुमक्षमः । स कथं

---

१. सनाशंसभिक्ष उः । ३ । २ । १६८ । इति— उः ।
२. यस्मादिति यतः—पञ्चम्यास्तसिल् । ५ । ३ । ७ । इतितसिल् । एवं ततः ।

कूपमण्डूकः । शौण्डिकी । वारुणी ।
दर्पणः । व्यपदेशः । शशी । तृषार्त्तः । यूथः ।

---

पृथिवीं शास्ति राज्यं वा तस्य किम् । त्वं च कूपमण्डूकः । तेन तदाश्रयमुपदिशसि । शृणु ।

सेवितव्यो महावृक्षः फलच्छायासमन्वितः[1] ।
यदि दैवात्फलं नास्ति च्छाया केन निवार्यते ॥ ९ ॥

अन्यच्च—

हीनसेवा न कर्तव्या कर्तव्यो महदाश्रयः ।
पयोऽपि शौण्डिकीहस्ते वारुणीत्यभिधीयते ॥ १० ॥
महानप्यल्पतां याति निर्गुणे गुणविस्तरः ।
आधाराधेयभावेन गजेन्द्र इव दर्पणे ॥ ११ ॥

विशेषतश्च—

व्यपदेशेऽपि सिद्धिः स्यादतिशक्ते नराधिपे ।
शशिनो व्यपदेशेन शशकाः सुखमासते[2] ॥ १२ ॥

मयोक्तम्—'कथमेतत् ।' पक्षिणः कथयन्ति—

## कथा ३

कदाचिदपि वर्षासु वृष्टेरभावात्तृषार्तो गजयूथो यूथपतिमाह 'नाथ, कोऽभ्युपायोऽस्माकं जीवनाय । नातिक्षुद्रजन्तूनां

---

१. फलं च- छाया च-फल छाये ताभ्यां समन्वितो युक्त इति ।
२. आसधातोर्लटि बहुवचने ।

निमज्जनम्। आहतिः। विषीदत। अन्तिकम्।

---

निमज्जनस्थानात्। वयं च निमज्जनस्थानाभावान्मृताहा इव। किं कुर्मः। क्व यामः।' ततो हस्तिराजो नातिदूरं गत्वा निर्मल-ह्रदं दर्शितवान्। ततो दिनेषु गच्छत्सु तत्तीरावस्थिता गजपादा-ऽऽहतिभिश्चूर्णिताः क्षुद्रशशकाः। अनन्तरं शिलीमुखो नाम शशकश्चिन्तयामास—अनेन गजयूथेन पिपासाऽऽकुलितेन प्रत्य-हमत्राऽऽगन्तव्यम्। अतोविनश्यत्यस्मत्कुलम्'। ततो विज-यो नाम वृद्धशशकोऽवदत्—'मया विषीदत, मा प्रतीकारः कर्तव्यः।' ततोऽसौ प्रतिज्ञाय चलितः, गच्छता च तेनाऽऽलो-चितम्—'कथं गजयूथसमीपे स्थित्वा वक्तव्यम्। यतः।

स्पृशन्नपि गजोहन्ति जिघ्रन्नपि भुजङ्गमः।
पालयन्नपि भूपालः प्रहसन्नपि दुर्जनः॥ १३॥

अतोऽहं पर्वतशिखरमारुह्य यूथनाथं सम्वादयामि।' तथा-ऽनुष्ठिते यूथनाथ उवाच—'कस्त्वम्। कुतः समायातः।' स ब्रूते—'शशकोऽहम्। भगवता चन्द्रेण भवदन्तिकं प्रेषितः।' यूथपतिराह—'कार्यमुच्यताम्।' विजयोब्रूते—

---

१. कुगति प्रादयः। २। २। १८। इति समासे। समासेऽनञ्पूर्वेक्त्वोल्यप्। ७। १। ३७। इतिक्त्वोल्यबादेशः— एवम्—आरुह्य—प्रणम्य—प्रसाद्ये-त्यादिषु।

२. स्पृश्-धातोर्लटि। लटः शतृशानचावप्रथमासमानाधिकरणे। ३। २। १२४। इतिलटः शतृ। एवंजिघ्रन्-पालयन्-प्रहसन्नित्यत्रापि।

उद्यतेष्वपि शस्त्रेषु दूतो वदति नाऽन्यथा ।
सदैवाऽवध्यभावेन यथार्थस्य हि वाचकः ॥ १४ ॥

तदहं तदाज्ञया ब्रवीमि । शृणु । यदेते चन्द्रसरोरक्षकाः[1] शशका स्त्वया निःसारितास्तदनुचितं कृतम् । ते शशकाश्चिरमस्माकं रक्षिताः । अत एव मे शशाङ्क इति प्रसिद्धिः ।' एवमुक्तवति दूते यूथपतिर्भयादिदमाह— 'प्रणिधे ! इदमज्ञानतः कृतम् । पुनर्न कर्तव्यम् ।' दूतउवाच— 'यद्येवं तदत्र सरसि कोपात्कम्पमानं भगवन्तं शशांकं प्रणम्य प्रसाद्य गच्छ ।' ततो रात्रौ यूथपतिं नीत्वा जले चञ्चलं चन्द्रबिम्बं दर्शयित्वा यूथपतिः प्रणामं कारितः । उक्तं च तेन—'देव, अज्ञानादनेनाऽपराधः कृतः । ततः क्षम्यतामिदानीम् । नैवमनन्तरं विधास्यते ।' इत्युक्त्वा प्रस्थापितः । अतोऽहं ब्रवीमि—'व्यपदेशेऽपि सिद्धिः स्यात्' इति । ततो मयोक्तम्—'स एवाऽस्मत्प्रभू[2] राजहंसो महाप्रतापोऽतिसमर्थः । त्रैलोक्यस्याऽपि प्रभुत्वं तत्र युज्यते किंपुना[3] राज्यम्' इति । तदाहं तैः पक्षिभिः 'दुष्ट, कथमस्मद्भूमौ चरसि' इत्यभिधाय राज्ञश्चित्रवर्णस्य समीपं नीतः । ततो राज्ञः पुरो मां

१. चन्द्रसरसो रक्षकाश्चन्द्र सरो रक्षकाः । षष्ठीतत्पुरुषः ।
२. रोरि । ८ । ३ । १४ । रेफस्यलोपे । ढ्रलोपे पूर्वस्यदीर्घोऽणः । ६ । ३ । १११ । इति पूर्वस्याणोदीर्घः ।
३. प्रभू राजहंस इतिवत् दीर्घः

अवधीयताम् । अधिक्षिपति । मौलम् ।
विपश्चित् । दक्षः । प्रगल्भः ।

---

प्रदर्श्य तैः प्रणम्योक्तम्—'देव, अवधीयतामेष दुष्टो बको यदस्मद्देशे चरन्नपि देवपादानधिक्षिपति ।' राजाऽऽह 'कोऽयम् कुतः समायातः ।' त उचुः—हिरण्यगर्भनाम्ना राजहंसस्याऽनुचरः कर्पूरद्वीपादागतः ।' अथाऽहं गृध्रेण मन्त्रिणा पृष्टः—'कस्तत्र मुख्यो मन्त्री' ति । मयोक्तम्— 'सर्वशास्त्रार्थपारगः सर्वज्ञो नाम चक्रवाकः । गृध्रो ब्रूते—'युज्यते । स्वदेशजोऽसौ यतः ।

स्वदेशजं कुलाऽऽचारं विशुद्धमथवा शुचिम् ।
मन्त्रज्ञमव्यसनिनं व्यभिचारविवर्जितम् ॥ १५ ॥
अधीतव्यवहारार्थं मौलं ख्यातं विपश्चितम् ।
अर्थस्योत्पादकं चैव विदध्यान्मन्त्रिणं नृपः ॥ १६ ॥

अत्राऽन्तरे शुकेनोक्तम्—'देव, कर्पूरद्वीपा लघुद्वीपा जम्बुद्वीपान्तर्गता एव । तत्रापि देवपादानामेवाऽऽधिपत्यम् ।' ततो राज्ञाऽप्युक्तम्—'एवमेव । यतः—

राजा मत्तः शिशुश्चैव प्रमादी धनगर्वितः ।
अप्राप्यमपि वाञ्छन्ति किं पुनर्लभ्यतेऽपि तत् ॥ १७ ॥

ततो मयोक्तम्—'यदि वचनमात्रेणैवाऽऽधिपत्यं सिद्ध्यति तदा जम्बुद्वीपेऽप्यस्मत्प्रभोर्हिरण्यगर्भस्य स्वाम्यमस्ति ।' शुको ब्रूते— 'कथमत्र निर्णयः, मयोक्तम्—'संग्राम एव ।' राज्ञा विहस्योक्तम् 'स्वस्वामिनं गत्वा सज्जीकुरु ।' तदा मयोक्तम्—

परमर्मज्ञः । प्रतिभानवान् । गृध्रः । दशाननः ।
संयतः । महोदधिः । वर्तकः ।

---

'स्वदूतोऽपि प्रस्थाप्यताम् ।' राजोवाच :— 'कः प्रयास्यति दौत्येन । यत एवंभूतो दूतः कार्यः ।

भक्तो गुणी शुचिर्दक्षः प्रगल्भोऽव्यसनी क्षमी ।
ब्राह्मणः परमर्मज्ञो दूतः स्यात्प्रतिभानवान् ॥ १८ ॥

गृध्रो वदति—'सन्त्येवंभूता बहवः । किंतु ब्राह्मण एव कर्तव्यः । राजाऽऽह—'ततः शुक एव व्रजतु । शुक ? त्वमेवाऽनेन सह गत्वाऽस्मदभिलषितं ब्रूहि ।' शुको ब्रूते—'यथाऽऽज्ञापयति देवः । किंत्वयं दुर्जनो बकः । तदनेन सह न गच्छामि । तथा चोक्तम् :—

खलः करोति दुर्वृत्तं नूनं फलति साधुषु ।
दशाननोऽहरत्सीतां संयतश्च महोदधिः ॥ १९ ॥

अपरं च—

न स्थातव्यं न गन्तव्यं दुर्जनेन समं क्वचित् ।
काकसंगाद्धतो हंसस्तिष्ठन्गच्छँश्च वर्तकः ॥ २० ॥

राजोवाच—'कथमेतत् । शुकः कथयति—

---

१. प्रतिभानं-ज्ञानं-तदस्यास्तीति प्रतिभानवान् । तदस्यास्त्यस्मिन्निति मतुप् । ५ । २ । ९४ । इति मतुपि सति-मादुपधायाश्च मतोर्वोऽयवादिभ्यः । ८ । २ । ९ । इति मतोर्मस्य वः ।

क्रान्तारः। निर्भरः। व्यादानम्।
असहिष्णुः। पुरीषः। काण्डम्।

---

## कथा ४।

अस्त्युज्जयिनीवर्त्मकान्तारे प्लक्षतरुः। तत्र हंसकाकौ निवसतः। कदाचिद्‌ग्रीष्मसमये परिश्रान्तः कश्चित्पथिकस्तत्र तरुतले धनुःकाण्डं सन्निधाय सुप्तः। तत्र क्षणान्तरे तन्मुखाद्‌ वृक्षच्छायाऽपगता। ततः सूर्यतेजसा तन्मुखं व्याप्तमवलोक्य तद्‌वृक्षस्थितेन हंसेन कृपया पक्षौ प्रसार्य पुनस्तन्मुखे छाया कृता। ततोनिर्भरनिद्रासुखिना तेन मुखव्यादानं कृतम्। अथ परसुखमसहिष्णुः[1] स्वभावदौर्जन्येन स काकस्तस्य मुखेपुरीषोत्सर्गं कृत्वा पलायितः। ततो यावदसौ पान्थ उत्थायोर्ध्वं निरीक्षते तावत्तेनाऽवलोकितो हंसः काण्डेन हतो व्यापादितः॥

वर्तककथामपि कथयामि—

## कथा ५।

एकदा भगवतो गरुडस्य यात्राप्रसङ्गेन सर्वे पक्षिणः समुद्रतीरं गताः। ततः काकेन सह वर्तकश्चलितः। अथ गोपालस्य गच्छतो दधिभाण्डाद्‌ वारंवारं तेन काकेन दधि खाद्यते। ततो यावदसौ दधिभाण्डं भूमौ निधायोर्ध्वमवलोकते, तावत्तेन

---

१. अलंकृञ्निराकृञ्प्रजनोत्पचोत्पतोन्मदरुच्यप त्रपवृतु वृधु सहचर इष्णुच्। ३।२।१३६। इतीष्णुच्।

खेदितः । कुसुमम् । निदानम् ।

विवदेत् । विज्ञः ।

---

काकवर्तकौ दृष्टौ । ततस्तेन खेदितः काकः पलायितः । वर्तकः स्वभावनिरपराधो मन्दगतिस्तेन प्राप्तो व्यापादितः । अतोऽहं ब्रवीमि—'न स्थातव्यं न गन्तव्यम्' इत्यादि ॥ ततो मयोक्तम्—भ्रातः शुक, किमेवं ब्रवीषि । मां प्रति यथा श्रीमद्देवस्तथा भवानपि ।' शुकेनोक्तम् । 'अस्त्वेवम् । किंतु—

दुर्जनैरुच्यमानानि सम्मतानि प्रियाण्यपि ।
अकालकुसुमानीव भयं सञ्जनयन्ति हि ॥ २१ ॥

दुर्जनत्वंच भवता वाक्यादेव ज्ञातं यदनयोर्भूपालयोर्विग्रहे भवद्वचनमेव निदानम् ।

ततोऽहं तेन राज्ञा यथाव्यवहारं सम्पूज्य प्रस्थापितः । शुकोऽपि मम पश्चादागच्छन्नास्ते । एतत्सर्वं परिज्ञाय यथाकर्तव्यमनुसन्धीयताम् ।' चक्रवाको विहस्याऽऽह—'देव, बकेन तावद्देशान्तरमपि गत्वा यथाशक्ति[1] राजकार्यमनुष्ठितम् । किंतु देव ! स्वभाव एष मूर्खाणाम् । यतः—

शतं दद्यान्न विवदेदिति विज्ञस्य सम्मतम् ।
विना हेतुमपि[2] द्वन्द्वमेतन्मूर्खस्य लक्षणम् ॥ २२ ॥

---

१. शक्तिमनतिक्रम्य यथाशक्ति । अव्ययं विभक्तिसमीपसमृद्धिव्यृद्ध्यर्थाभावात्ययासम्प्रतिशब्दप्रादुर्भावपश्चाद्यथानुपूर्व्ययौगपद्यसादृश्यसम्पत्तिसाकल्यान्तवचनेषु । २ । १ ६ । इत्यव्ययीभावः ।

२. पृथग्बिनानानाभिस्तृतीयाऽन्यतरस्याम् । २ । ३ । ३२ । इति द्वितीया ।

उपालम्भनम्। प्रस्तुतः। विजनम्।
प्रतिध्वानः। नियोगी। आतुरः।
प्रहीयताम्। चारः।

---

राजाऽऽह—'किमतीतोपालम्भनेन। प्रस्तुतमनुसन्धीयताम्। चक्रवाको ब्रूते—'देव! विजने ब्रवीमि। यतः—

वर्णाकारप्रतिध्वानैर्नेत्रवक्त्रविकारतः।
अप्यूहन्ति मनो धीरास्तस्माद्रहसि मन्त्रयेत्[१] ॥ २३ ॥

राजा मन्त्री च तत्र स्थितौ। अन्येऽन्यत्र गताः। चक्रवाको ब्रूते—'देव' अहमेवं जानामि। कस्याप्यस्मन्नियोगिनः प्रेरणया बकेनेदमनुष्ठितम्। यतः—

वैद्यानामातुरः श्रेयान्व्यसनी यो नियोगिनाम्।
विदुषां जीवनं मूर्खः सद्वर्णो जीवनं सताम् ॥ २४ ॥

राजाऽब्रवीत्—'भवतु, कारणमत्र पश्चान्निरूपणीयम्। संप्रति यत्कर्तव्यं तन्निरूप्यताम्।' चक्रवाको ब्रूते—'देव, प्रणिधिस्तावत्प्रहीयताम्। ततस्तदनुष्ठानं बलाऽबलं च जानीमः तथा हि:—

भवेत्स्वपरराष्ट्राणां कार्याऽकार्याऽवलोकने।
चारश्चक्षुर्महीभर्तुर्यस्य नास्त्यन्ध एव सः[२] ॥ २५ ॥

---

१. हश्चि च। ६। १। ११४। इतिरोत्वे=आद्गुणः। ६। १ ८७। इति गुणः।

२. चारश्चासौ चक्षुश्चेति चारचक्षुः कर्मधारयः।

सुनिभृतम् । निगद्य । सुगुप्तम् ।
षट्कर्णः । प्रतीहारः । आवासः ।

---

स च द्वितीयं विश्वासपात्रं गृहीत्वा यातु । तेनाऽसौ स्वयं तत्राऽवस्थाय द्वितीयं तत्रत्यमन्त्रकार्यं सुनिभृतं निश्चित्य निगद्य प्रस्थापयति । गूढचारश्च यो जले स्थले चरति । ततोऽसावेव बको नियुज्यताम् । एतादृश एव कश्चिद्बको द्वितीयत्वेन प्रयातु । तद्गृहलोकाश्चराजद्वारे तिष्ठन्तु । किन्तु देव, एतदपि सुगुप्तमनुष्ठातव्यम् । यतः—

षट्कर्णो भिद्यते मन्त्रस्तथा प्राप्तश्च वार्तया ।
इत्यात्मनाद्वितीयेन मन्त्रः कार्यो महीभृता ॥ २६ ॥

राजा विमृश्योवाच—'प्राप्तस्तावन्मयोत्तमः प्रणिधिः ।' मन्त्री ब्रूते—तदा सङ्ग्रामविजयोऽपि प्राप्तः । अत्राऽन्तरे प्रतिहारः प्रविश्य प्रणम्योवाच—'देव, जम्बुद्वीपादागतो द्वारि शुकस्तिष्ठति ।' राजा चक्रवाकमालोकते । चक्रवाकेणोक्तम्—'तावद्गत्वाऽऽवासे तिष्ठतु पश्चादानीय द्रष्टव्यः ।' प्रतीहारस्तमावासस्थानं नीत्वाऽऽगतः । राजाऽऽह—विग्रहस्तावत्समुपस्थितः ।' चक्रो ब्रूते—'देव, प्रागेव विग्रहो न विधिः । यतः—

स किं भृत्यः स किं मन्त्री य आदावेव भूपतिम् ।
युद्धोद्योगं स्वभूत्यागं निर्दिशत्यविचारितम् ॥ २७ ॥

---

१. वा अरि । ८ । ३ । ३६ । इति विसर्जनीयस्य विसर्जनीयः ।

कृषिः। आश्वास्य। प्राकारः। अनुसन्धेहि।

किंतु विग्रहमुपस्थितं विलोक्य व्यवह्रियताम्। यतः—

यथा कालकृतोद्योगात्कृषिः फलवती भवेत्।
तद्वन्नीतिरियं देव चिरात्फलति रक्षणात्॥ २८॥

अपरं च—

महतो दूरभीरुत्वमासन्ने शूरता गुणः।
विपत्तौ च महांल्लोके[1] धीरतामनुगच्छति॥ २९॥

विशेषतश्च महाबलोऽसौ चित्रवर्णो राजा।

अतस्तद्दूतोऽप्याश्वास्य तावद्ध्रियतां यावद्दुर्गः सज्जीक्रियते। यतः—

एकः शतं योधयति प्राकारस्थो धनुर्धरः।
शतं शतसहस्राणि तस्माद्दुर्गं विशिष्यते॥ ३०॥

राजाऽऽह—'दुर्गाऽनुसन्धाने को नियुज्यताम्।' चक्रो ब्रूते

यो यत्र कुशलः कार्ये तं तत्र विनियोजयेत्।
कर्मस्वदृष्टकर्मा यः शास्त्रज्ञोऽपि विमुह्यति॥ ३१॥

तदाहूयतां सारसः।' तथाऽनुष्ठिते सत्यागतं सारसमालोक्य राजोवाच—'भोः सारस, त्वं सत्वरं दुर्गमनुसन्धेहि।' सारसः प्रणम्योवाच—'देव, दुर्गं तावदिदमेव चिरात्सुनिरूपि-

१. महान् लोके इति—छेदः।

अनुतिष्ठ । विपक्षः । उपान्तः ।

---

तमास्ते महत्सरः । किंत्वत्र मध्यवर्तिद्वीपे द्रव्यसंग्रहः क्रियताम् । यतः—

धान्यानां संग्रहो राजन्नुत्तमः सर्वसङ्ग्रहात् ।
निक्षिप्तं हि मुखे रत्नं न कुर्यात्प्राणधारणम् ॥ ३२ ॥

राजाऽऽह—'सत्वरं गत्वा सर्वमनुतिष्ठ ।' पुनः प्रविश्य प्रतीहारो ब्रूते—'देव, सिंहलद्वीपादागतो मेघवर्णो नाम वायसः सपरिवारो द्वारि तिष्ठति । देवपादं द्रष्टुमिच्छति ।' राजाऽऽह—'काकः पुनः सर्वज्ञो बहुद्रष्टा च । तद्भवता सङ्ग्राह्य इत्यनुवर्तते ।' चक्रो ब्रूते-'देव, अस्त्येवम् । किंतु काकः स्थलचरः । तेनाऽस्मद्विपक्षे नियुक्तः कथं सङ्ग्राह्यः । तथा चोक्तम्—

आत्मपक्षं परित्यज्य परपक्षेषु यो रतः ।
स परैर्हन्यते मूढो नीलवर्णशृगालवत्[1] ॥ ३३ ॥

## कथा ६ ।

अस्त्यरण्ये कश्चिच्छृगालः[2] स्वेच्छया नगरोपान्ते भ्राम्यन्नीलीभाण्डे पतितः । पश्चात्तत उत्थातुमसमर्थः प्रातरात्मानं मृतवत्सन्दर्श्य स्थितः । अथ नीलीभाण्डस्वामिना मृत इति ज्ञात्वा

---

१. शृगालेन तुल्यमिति शृगालवत् । तेन तुल्यं क्रिया चेद्वतिः । ५ । १ । ११५ । इति वतिः ।

( २ ) कश्चित्-शृगालः इति-छेदः ।

उत्कर्षः। आधिपत्यम्। परिजनः।
सदः। विषण्णम्। विप्रलब्धः।
सन्निधानम्। रावः।

---

तस्मात्समुत्थाप्य दूरे नीत्वाऽपसारितस्तस्मात्पलायितः ततोऽसौ वनं गत्वा स्वकीयमात्मानं नीलवर्णमवलोक्याचिन्तयत्—'अहमिदानीमुत्तमवर्णः। तदाऽहं स्वकीयोत्कर्षं किं न साधयामि।' इत्यालोच्य शृगालानाहूय तेनोक्तम्—अहं भगवत्या वनदेवतया स्वहस्तेनाऽरण्यराज्ये सर्वौषधिरसेनाऽभिषिक्तः। तदद्याऽऽरभ्याऽरण्येऽस्मदाज्ञया व्यवहारः कार्यः।' शृगालाश्च तं विशिष्टवर्णमवलोक्य साष्टाङ्गपातं प्रणम्योचुः—'यथाज्ञापयति देवः।' इत्यनेनैवक्रमेण सर्वेष्वरण्यवासिष्वाधिपत्यं तस्य बभूव। ततस्तेन व्याघ्रसिंहादीनुत्तमपरिजनान्प्राप्य सदसि शृगालानवलोक्य लज्जमानेनाऽवज्ञया स्वज्ञातयः सर्वे दूरीकृताः। ततो विषण्णाञ्छृगालानवलोक्य केनचिद्वृद्धशृगालेनैतत्प्रतिज्ञातम्—'मा विषीदत। यदनेनाऽनभिज्ञेन नीतिविदो मर्मज्ञा वयं स्वसमीपात्परिभूतास्तद्यथाऽयं नश्यति तथा विधेयम्। यतोऽमी व्याघ्रादयो वर्णमात्रविप्रलब्धाः शृगालमज्ञात्वा राजानमिमं मन्यन्ते। तद्यथाऽयं परिचितो भवति तथा कुरुत। तत्र चैवमनुष्ठेयम्। यतः सर्वे सन्ध्यासमये सन्निधाने महारावमेकदैव करिष्यथ। ततस्तं शब्दमाकर्ण्य जातिस्वभावात्तेनाऽपि

---

१. सन्धि विभागः कार्य्यः।

शब्दः कर्तव्यः[1]।' ततस्तथाऽनुष्ठिते सति तद्वृत्तम्।
यतः—

> यः स्वभावो हि यस्याऽस्ति स नित्यं दुरतिक्रमः।
> श्वा यदि क्रियते राजा तत्किं नाऽश्नात्युपानहम्॥ ३४॥

ततः शब्दादभिज्ञाय स व्याघ्रेण हतः।

अतोऽहं ब्रवीमि—'आत्मपक्षं परित्यज्य' इत्यादि॥
राजाऽऽह—'यद्येवं तथापि दृश्यतां तावदयं दूरादागतः। तत्संग्रहे विचारः कार्यः।' चक्रो ब्रूते—'देव' प्रणिधिः प्रहितो-दुर्गश्च सज्जीकृतः अतः शुकोऽप्यानीय प्रस्थाप्यताम्।

ततः सभां कृत्वाऽऽहूतः शुकः काकश्च। शुकः किंचिदुन्नतशिरा दत्तासनउपविश्य ब्रूते 'भो हिरण्यगर्भ! महाराजाधिराजः श्रीमच्चित्रवर्णस्त्वां समाज्ञापयति। यदि जीवितेन श्रिया वा प्रयोजनमस्ति तदा सत्वरमागत्याऽस्मच्चरणौ प्रणम। न चेदवस्थातुं स्थानान्तरं चिन्तय। राजा सकोपमाह— 'आः, कोऽप्यस्माकं पुरतो नास्ति य एनं गलहस्तयति[2]।' उत्थाय मेघवर्णो ब्रूते—'देव, आज्ञापय। हन्मि दुष्टं शुकम्।' सर्वज्ञो राजानं काकं च सान्त्वयन्ब्रूते— शृणु तावत्।

---

१. कृधातोः कर्मणि—तव्यत्तव्यानीयरः। ३। १। ९६। इतितव्यप्रत्ययः।
२. गलहस्तं करोतीति गलहस्तयति। तत्करोति तदाचष्टे इति णिच्।

अपकर्षम् । परोत्कर्षम् । आपन्नः ।
प्रबोधः । कनकः ।

---

न सा सभा यत्र न सन्ति वृद्धा
वृद्धा न ते ये न वदन्ति धर्मम् ।
धर्मः स नो यत्र न सत्यमस्ति
सत्यं न तद्यच्छलमभ्युपैति[2] ॥ ३५ ॥

यतो धर्मश्चैषः—

दूतो म्लेच्छोऽप्यवध्यः स्याद्राजा दूतमुखो यतः ।
उद्यतेष्वपि शस्त्रेषु दूतो वदति नान्यथा ॥ ३६ ॥

किं च—

स्वाऽपकर्षं परोत्कर्षं दूतोक्तैर्मन्यते तु कः ।
सदैवाऽवध्यभावेन दूतः सर्वं हि जल्पति ॥ ३७ ॥

ततो राजा काकश्च स्वां प्रकृतिमापन्नौ । शुकोऽप्युत्थाय चलितः ।

पश्चाच्चक्रवाकेणाऽऽनीय प्रबोध्य कनकालङ्कारादिकं दत्वा सम्प्रेषितो ययौ । शुकोऽपि विन्ध्याचलराजं प्रणतवान् । राजोवाच शुक का वार्ता । कीदृशोऽसौ देशः । शुको ब्रूते—देव ! संक्षेपादियं वार्ता । सम्प्रति युद्धोद्योगः क्रियताम् । देशश्चाऽसौ कर्पूरद्वीपः

---

१. संधिविभागः कार्यः ।
२. एतयेधत्यूह्गु । ६ । १ । ८९ । इतिवृद्धिः ।

स्वर्गैकदेशो राजा च द्वितीय स्वर्गपतिः। कस्तं वर्णयितुं शक्यते।' ततः सर्वाञ्छिष्टानाहूय राजा मन्त्रयितुमुपविष्टः। आह च— सम्प्रति कर्तव्यविग्रहे यथाकर्तव्यमुपदेशं ब्रूत। विग्रहः पुनरवश्यं कर्तव्यः।

दूरदर्शी नाम गृध्रो ब्रूते—'देव, व्यसनितया विग्रहो न विधिः। यतः—

मित्राऽमात्यसुहृद्वर्गा यदा स्युर्दृढभक्तयः।
शत्रूणां विपरीताश्च कर्तव्यो विग्रहस्तदा ॥ ३८ ॥

अन्यच्च।

भूमिर्मित्रं हिरण्यं च विग्रहस्य फलं त्रयम्।
यदैतन्निश्चितं भावि कर्तव्यो विग्रहस्तदा' ॥ ३९ ॥

राजाऽऽह—'मद्बलं तावदवलोकयतु मन्त्री। तदैतेषामुपयोगो ज्ञायताम् एवमाहूयतां मौहूर्तिकः। निर्णीय शुभलग्नं ददातु। मन्त्री ब्रूते—'तथाऽपि सहसा यात्राकरणमनुचितम्।

राजाऽऽह—'मन्त्रिन्, ममोत्साहभङ्गः सर्वथा मा कृथा[1]ः। विजिगीषुर्यथा परभूमिमाक्रामति तथा कथय।' गृध्रो ब्रूते—, तत्कथयामि। किंतु तदनुष्ठितमेव फलप्रदम्।

१. कृधातोर्लोटः स्थाने—माङिलुङ्। ३। ३। १७५। इतिलुङ् तनादिभ्य स्तथासोः। २।४। ७९। इतिलुकोऽभावे—ह्रस्वादङ्गात् ८। २। २७। इति सिचोलोपः।

व्यूहीकृतः । कलत्रश्च । फल्गु । पदातिः ।
सुभटः । ऊरीकृत्य । प्रतायते ।

---

राजाऽऽदेशश्चाऽनतिक्रमणीयः । यथाश्रुतं तन्निवेदयामि । शृणु ।

नद्यद्रिवनदुर्गेषु यत्र यत्र भयं नृप ।
तत्र तत्र च सेनानीर्यायाद्व्यूहीकृतैर्बलैः ॥ ४० ॥

बलाध्यक्षः पुरो यायात्प्रवीरपुरुषान्वितः ।
मध्ये कलत्रं स्वामी च कोशः फल्गु च यद्बलम् ॥ ४१ ॥

पार्श्वयोरुभयोरश्वा अश्वानां पार्श्वतो रथाः ।
रथानां पार्श्वयोर्नागा नागानां च पदातयः ॥ ४२ ॥

पश्चात्सेनापतिर्यायात्खिन्नानाश्वासयञ्छनैः ।
मन्त्रिभिः सुभटैर्युक्तः प्रतिगृह्य बलं नृपः ॥ ४३ ॥

राजाऽऽह—,आः 'किं बहुनोदितेन ।

आत्मोदयः परग्लानिर्द्वयं नीतिरितीयती ।
तदूरीकृत्य कृतिभिर्वाचस्पत्यं प्रतायते' ॥ ४४ ॥

---

१. सन्धि विभागः कार्य्यः ।
२. ऊर्यादिच्विडाचश्च । १ । ४ । ६१ । इतिगति संज्ञायां कुगतिप्रादयः । २ । २ । १८ । इति समासे—समासेऽनञ्पूर्वेक्त्वोल्यप् । इति क्त्वोल्यपि ह्रस्वस्यपिति कृतितुक् । ६ । १ । ७१ । इति तुगागमः ।
३. प्रपूर्वात्तनुधातोः—सार्वधातुके यक् । ३ । १ । ६७ । इति यक । ततः—तनोतेर्यकि । ६ । ४ । ४४ । इत्याकारोऽन्तादेशः ।

उच्छृङ्खलम् । नियन्त्रितः । तिमिरम् ।
प्रहितः । अधित्यका । इङ्गितम् । आगन्तुः ।

---

मन्त्रिणा विहस्योच्यते— 'सर्वमेतद्विशेषतश्चोच्यते । किंतु—

अन्यदुच्छृङ्खलं सत्त्वमन्यच्छास्त्रनियन्त्रितम् ।
सामानाधिकरण्यं हि तेजस्तिमिरयोः कुतः ॥ ४५ ॥

तत उत्थाय राजा मौहूर्तिकावेदितलग्ने प्रस्थितः ।

अथ प्रहितप्रणिधिर्हिरण्यगर्भमागत्योवाच—'देव, समागतप्रायो राजा चित्रवर्णः । सम्प्रति मलयपर्वताऽधित्यकायां समावासितकटकोऽनुवर्तते । दुर्गशोधनं प्रतिक्षणमनुसन्धातव्यं यतोऽसौ गृध्रोमहामन्त्री । किंच केनचित्सह तस्य विश्वासकथाप्रसङ्गेनैव तदिङ्गितमवगतं मया यदनेन कोऽप्यस्मद्दुर्गे प्रागेव नियुक्तः ।, ब्रूते—देव काक एवाऽसौ सम्भवति ।, राजाऽऽह—'न कदाचिदेतत् । यद्येवं तदा कथं शुकस्याऽभिभवोद्योगः कृतः । अपरं च । शुकस्याऽऽगमनात्तस्य विग्रहोत्साहः । स चिरादत्रास्ते ।' मन्त्री ब्रूते तथाप्यागन्तुः शङ्कनीयः ।, राजाऽऽह— 'आगन्तुका हि कदाचिदुपकारका दृश्यन्ते । शृणु ।

---

१. शकि शंकायामित्यतः—तव्यत्तव्यानीयरः । ३ । १ । ९६ । इत्यनीयर् प्रत्ययः ।

क्रीडासरः। अनुरागवान्। वर्तनम्। ताम्बूलम्।

आसीद्वीरवरो नाम शूद्रकस्य महीभृतः।
सेवकः स्वल्पकालेन स ददौ सुतमात्मनः॥ ४६॥

चक्रः पृच्छति—'कथमेतत्।', राजा कथयति—

## कथा ७

अहं पुरा शूद्रकस्य राज्ञः क्रीडासरसि कर्पूरकेलिनाम्नो राजहंसस्य पुत्र्या कर्पूरमञ्जर्या सहाऽनुरागवानभवम्। तत्र वीरवरो नाम महाराजपुत्रः कुतश्चिद्देशादागत्य राजद्वारमुपगम्य प्रतिहारमुवाच—'अहं तावद्वेतनार्थी राजपुत्रः। राजदर्शनं कारय।' ततस्तेनाऽसौ राजदर्शनं कारितो ब्रूते—'देव, यदि मया सेवकेन प्रयोजनमस्ति तदाऽस्मद्वर्तनं क्रियताम्।' शूद्रक उवाच—'किं ते वर्तनम्।' वीरवरो ब्रूते—प्रत्यहं सुवर्ण पञ्च शतानि देहि। राजाऽऽह—काते सामग्री। वीरवरो ब्रूते—'द्वौ बाहू तृतीयश्च खड्गः। राजाऽऽह—'नैतच्छक्यम्। तच्छ्रुत्वा वीरवरश्चलितः। अथ मन्त्रिभिरुक्तम्—'देव, दिनचतुष्टयस्य वर्तनं दत्वा ज्ञायतामस्य स्वरूपं किमुपयुक्तो ऽयमेतावद्वर्तनं गृह्णात्यनुपयुक्तो वेति।' ततो मन्त्रिवचनादाहूय वीरवराय ताम्बूलं दत्वा पञ्चशतानि सुवर्णानि दत्तानि। तद्विनियोगश्च राज्ञा सुनिभृतंनिरूपितः। तदर्धं वीरवरेण देवेभ्यो ब्राह्मणेभ्यो दत्तम्[1]। स्थितस्यार्धं दुःखितेभ्यः।

१. दाधातोः कर्मणिक्तप्रत्यये—दोदद्घोः। ७ ४ ४६। इतिददादेशः।

पाणिः। क्रन्दनध्वनिः। सूचीभेद्यम्।

विश्रान्ता। अवलम्बनम्। उपहारः।

---

तदवशिष्टं भोज्यव्ययविलासव्ययेन। एतत्सर्वं नित्यकृत्यं कृत्वा राजद्वारमहर्निशं खड्गपाणिः[1] सेवते। यदा च राजा स्वयं समादिशति तदा स्वगृहमपि याति।

अथैकदा कृष्णचतुर्दश्यां रात्रौ राजा सकरुणं क्रन्दनध्वनिं शुश्राव। शूद्रक उवाच—'कः कोऽत्र द्वारि।' तेनोक्तम्—'देव' अहं वीरवरः। राजोवाच—क्रन्दनाऽनुसरणं क्रियताम्।' वीरवरः यथाऽऽज्ञापयति देवः, इत्युक्त्वा चलितः। राज्ञाच चिन्तितम्—'नैतदुचितम्। अयमेकाकी राजपुत्रो मया सूचीभेद्ये तमसि प्रेरितः। तदनुगत्वा किमेतदिति निरूपयामि।' ततोराजापि खड्गमादाय तदनुसरणक्रमेण नगराद्बहिर्निर्जगाम। गत्वा च वीरवरेण सा रुदति रूपयौवनसम्पन्ना सर्वालङ्कारभूषिता काचित्स्त्री दृष्टापृष्टा च—'का त्वम्। किमर्थं रोदिषि। स्त्रियोक्तम्—'अहमेतस्य शूद्रकस्य राजलक्ष्मीः। चिरादेतस्य भुजच्छायायां महता सुखेन विश्रान्ता। इदानीमन्यत्र गमिष्यामि।' वीरवरो ब्रूते—'यत्राऽपायः सम्भवति तत्रोपायोऽप्यस्ति। तत्कथं स्यात्पुनरिहाऽवलम्बनं भवत्याः।' लक्ष्मीरुवाच—'यदि त्वमात्मनः पुत्रं शक्तिधरं द्वात्रिंशल्लक्षणोपेतं भगवत्याः सर्वमङ्गलाया

---

१. खड्गः पाणौ यस्येति बहुव्रीहिः।

वधूः । प्रबोधिता । विनियोगः ।
निष्क्रयः । निस्तारः ।

उपहारीकरोषि तदहं पुनरत्र सुचिरं निवसामि' इत्युक्त्वाऽदृश्याऽभवत् ।

ततो वीरवरेण स्वगृहं गत्वा निद्रायमाणा स्ववधूः प्रबोधिता पुत्रश्च । तौ निद्रां परित्यज्योत्थायोपविष्टौ । वीरवरस्तत्सर्वं लक्ष्मीवचनमुक्तवान् तच्छ्रुत्वा सानन्दं शक्तिधरो ब्रूते—'धन्योऽहमेवंभूतः स्वामिराज्यरक्षार्थं यन्ममोपयोगः श्लाघ्यः। तत्कोऽधुना विलम्बस्य हेतुः । एवंविधे कर्मणि देहस्य विनियोगः श्लाघ्यः ।

शक्तिधरमातोवाच—'यद्येतन्न कर्तव्यं तत्केनाप्यन्येन कर्मणा मुख्यस्य महावर्तनस्य निष्क्रयो भविष्यति ।' इत्यालोच्य सर्वे सर्वमङ्गलायाः स्थानं गताः तत्र सर्वमङ्गलां सम्पूज्य वीरवरो ब्रूते—'देवि[2], प्रसीद । विजयतां शूद्रको महाराजः । गृह्यतामुपहारः ।' इत्युक्त्वा पुत्रस्य शिरश्चिच्छेद[3] । ततो वीरवरश्चिन्तयामास—'गृहीतराजवर्तनस्य निस्तारः कृतः । अधुना निष्पुत्रस्य जीवनेनाऽलम् ।' इत्यालोच्याऽऽत्मनः

१. कृभ्वस्तियोगे सम्पद्यकर्तरि च्विः । ५ । ४ । ५० । इति च्वि प्रत्यये तस्य च लोपे–अस्य च्वौ । ७ । ४ । ३२ । इतीत्वम् ।

२. सम्बोधने अम्बार्थ नद्योर्ह्रस्वः । ७ । ३ । १०७ । इति ह्रस्वः ।

३. छिद्धातोर्लिटि रूपम् ।

अनुकम्पनीयः । अलक्षितः । अन्तः पुरम् । महासत्वः ।

---

शिरश्छेदः कृतः ततः स्त्रियापि स्वामिपुत्रशोकार्तया तदनुष्ठितम् । तत्सर्वं दृष्ट्वा राजा साश्चर्यं चिन्तयामास—

'जीवन्ति च म्रियन्ते च मद्विधाः क्षुद्रजन्तवः ।
अनेन सदृशो लोके न भूतो न भविष्यति ॥ ४७ ॥

तदेतेन परित्यक्तेन मम राज्येनाऽप्यप्रयोजनम् ।' ततः शूद्रकेणाऽपि स्वशिरश्छेत्तुं खड्गः समुत्थापितः । अथ भगवत्या सर्वमङ्गलया राज्ञा हस्ते धृत उक्तश्च—'पुत्र, प्रसन्नास्मि ते । एतावता साहसेनालम् । जीवनान्तेऽपि तव राज्यभङ्गो नास्ति ।' राजा च साष्टाङ्गपातं प्रणम्योवाच— 'देवि, किं मे राज्येन जीवीतेन वा किं प्रयोजनम् । यद्यहमनुकम्पनीयस्तदा ममायुः शेषेणाऽयं सदारपुत्रो वीरवरो जीवतु । अन्यथाऽहं यथाप्राप्तां गतिं गच्छामि ।' भगवत्युवाच—'पुत्र' अनेन ते सत्त्वोत्कर्षेण भृत्यवात्सल्येन च तुष्टास्मि । गच्छ । विजयी भव । अयमपि सपरिवारो राजपुत्रो जीवतु[2] ।' इत्युक्त्वा देव्यदृश्याऽभवत् । ततो वीरवरः सपुत्रदारो गृहं गतः । राजाऽपि तैरलक्षितः सत्वरमन्तःपुरं प्रविष्टः ।

अथ प्रभाते वीरवरो द्वारस्थः पुनः भूपालेन पृष्टः सन्नाह— देव, सा रुदती मामवलोक्याऽदृश्याऽभवत् । न काप्यन्या

---

१. उदः स्थास्तम्भोः पूर्वस्य । ८ । ४ । ६१ । इति पूर्वसवर्णः ।
२. आशिषि लोट् ।

अविकत्थनः । अनिष्ठुरः । प्रस्तुत्य ।
कोशः । निध्यर्थी ।

---

वार्ताविद्यते ।' तद्वचनमाकर्ण्य राजाऽचिन्तयत्— 'कथमयं श्लाघ्यो महासत्वः । यतः—

प्रियं ब्रूयादकृपणः शूरः स्यादविकत्थनः ।
दाता नाऽपात्रवर्षी च प्रगल्भः स्यादनिष्ठुरः ॥ ४८ ॥

एतन्महापुरुषलक्षणमेतस्मिन्सर्वमस्ति ।' ततः स राजा प्रातः शिष्टसभां कृत्वा सर्ववृत्तान्तं प्रस्तुत्य प्रसादात्तस्मै कर्नाटराज्यं ददौ । तत्किमागन्तुको जातिमात्राद्दुष्टः तत्राऽप्युत्तमाधममध्यमाः सन्ति ।' चक्रवाको ब्रूते—

'योऽकार्यं कार्यवच्छास्ति स किंमन्त्री नृपेच्छया ।
वरं स्वामिमनोदुःखं तन्नाशो नत्वकार्यतः ॥ ४९ ॥

वैद्यो गुरुश्च मन्त्री च यस्य राज्ञः प्रियः सदा ।
शरीरधर्मकोशेभ्यः क्षिप्रं स परिहीयते ॥ ५० ॥

शृणु देव ।

पुण्याल्लब्धं यदेकेन तन्ममापि भविष्यति ।
हत्वा भिक्षुं महालोभान्निध्यर्थी नापितो हतः' ॥ ५१ ॥

राजा पृच्छति— 'कथमेतत् । मन्त्री कथयति—

---

१. तोर्लि । ८ । ४ । ६ । इतितवर्गस्य लकारे परसवर्णः ।

चन्द्रार्धचूडा । यक्षेश्वरः । क्षौरम् ।

सुनिभृतम् । उद्गारः ।

## कथा ९ ।

अस्त्ययोध्यायां चूडामणिर्नाम क्षत्रियः । तेन धनाऽर्थिना महता क्लेशेन भगवांश्चन्द्रार्धचूडामणिश्चिरमाराधितः । ततः क्षीणपापोऽसौ स्वप्ने दर्शनं दत्त्वा भगवदादेशाद्यक्षेश्वरेणाऽऽदिष्टः—'यस्त्वमद्य प्रातः क्षौरं कृत्वा लगुडं हस्ते धृत्वा गृहे निभृतं स्थास्यसि । ततोऽस्मिन्नेवाङ्गणे समागतं भिक्षुं पश्यसि तं निर्दयं लगुडप्रहारेण हनिष्यसि । ततः सुवर्णकलशो भविष्यति । तेन त्वया यावज्जीवं[1] सुखिना भवितव्यम् ।' ततस्तथानुष्ठिते तद्वृत्तम् । तत्र क्षौरकरणायाऽऽनीतेन नापितेनाऽऽलोक्य चिन्तितम् — 'अये, निधिप्राप्तेरयमुपायः । अहमप्येवं किं न करोमि ।' ततः प्रभृति नापितः प्रत्यहं तथाविधो लगुडहस्तः सुनिभृते भिक्षोरागमनं प्रतीक्षते एकदा तेन प्राप्तो भिक्षुः लगुडेन व्यापादितः । तस्मादपराधात्सोऽपि नापितो राजपुरुषैर्व्यापादितः । अतोऽहं ब्रवीमि—'पुण्याल्लब्धं यदेकेन' इत्यादि ।

पुरावृत्तकथोद्गारैः कथं निर्णीयते परः
स्यान्निष्कारणबन्धुर्वा किं वा विश्वासघातकः ॥ ५२ ॥

---

१. यावति विन्द जीवो: । ३ । ४ । ३- । इतिणमुल ।

अवमन्ता । रिपुः ।

अवस्कन्दः । प्रजागरः । अविनयः ।

---

यातु । प्रस्तुतमनुसन्धीयताम् । मलयाऽधित्यकायां चेच्चित्रवर्णस्त-दधुना किं विधेयम् ।' मन्त्री वदति—'देव, आगतप्रणिधिमुखा-न्मया श्रुतं तन्महामन्त्रिणो गृध्रस्योपदेशे यच्चित्रवर्णेनाऽनादरः कृतः ततोऽसौ मूढो जेतुं शक्यः । तथा चोक्तम्——

लुब्धः क्रूरोऽलसोऽसत्यः प्रमादी[1] भीरुरस्थिरः[2] ।
मूढो योधावमन्ता च सुखच्छेद्यो[3] रिपुः स्मृतः ॥ ५३ ॥

ततोऽसौ यावदस्मद्दुर्गद्वाररोधं न करोति तावन्नद्यद्रि-वनवर्त्मसु तद्बलानि हन्तुं सारसादयः सेनापतयो नियुज्य-न्ताम् । तथा चोक्तम्—

अवस्कन्दभयाद्राजा प्रजागरकृतश्रमम् ।
दिवासुप्तं समाहन्यान्निद्राव्याकुलसैनिकम् ॥ ५४ ॥

अतस्तस्य प्रमादिनो बलं गत्वा यथाऽवकाशं दिवानिशं घ्नन्त्वस्मत्सेनापतयः ।' तथाऽनुष्ठिते चित्रवर्णस्य सैनिकाः सेनापतयश्च बहवो निहताः । ततश्चित्रवर्णो विषण्णः स्वमन्त्रिणं दूरदर्शिनमाह—'तात, किमित्यस्मदुपेक्षा क्रियते किं क्वाप्यविनयो ममाऽस्ति ।

---

१. प्रपूर्वान्मदेः—शमित्यष्टाभ्यो घिनुण् । ३ । २ । १४१ । इति घिनुण् ।
२. बिभेतेः—भियः क्रुक्लुकनौ । ३ । २ । १७४ । इति क्रुप्रत्ययः ।
३. कृत्यैरधिकार्थवचने । २ । १ । ३३ । इति समासः ।

**तरुः । पानम् । मृगया । पारुष्यम् । उपन्यस्तम् ।**
**अनवधानम् । दुर्नीतिः । अपथ्यभुक् ।**
**दर्पयति । कौमुदी । उल्का ।**

---

**गृध्रोऽवदत्—'देव, शृणु ।**

अविद्वानपि भूपालो विद्यावृद्धोपसेवया ।
परां श्रियमवाप्नोति जलाऽऽसन्नतरुर्यथा ॥ ५५ ॥

**अन्यच्च ।**

पानं स्त्री मृगया द्यूतमर्थदूषणमेव च ।
वाग्दण्डयोश्च पारुष्यं व्यसनानि महीभुजाम् ॥ ५६ ॥

**त्वया स्वबलोत्साहमवलोक्य साहसैकवासिना मयोपन्यस्तेष्वपि मन्त्रेष्वनवधानं वाक्पारुष्यं च कृतम् । अतो दुर्नीतेः फलमिदमनुभूयते । तथा चोक्तम्—**

दुर्मन्त्रिणं कमुपयान्ति न नीतिदोषाः
सन्तापयन्ति कमपथ्यभुजं न रोगाः ।
कं श्रीर्न दर्पयति कं न निहन्ति मृत्युः
कं स्त्रीकृता न विषयाः परितापयन्ति ॥ ५७ ॥

**ततो मयाऽप्यालोचितम्— 'प्रज्ञाहीनोऽयं राजा । नो चेत्कथं नीतिशास्त्रकथाकौमुदीं वागुल्काभिस्तिमिरयति । यतः—**

यस्य नास्ति स्वयं प्रज्ञा शास्त्रं तस्य करोतु किम् ।
लोचनाभ्यां विहीनस्य दर्पणः किं करिष्यति' ॥ ५८ ॥

नियन्तकः । आतुरः । भिन्न सन्धानम् । भिषक् ।
सान्निपातिकः । सुस्थः । अदीर्घसूत्रता ।
अवरोधः । उपस्तम्भः ।

---

इत्यालोच्य तूष्णीं स्थितः । अथ राजा बद्धाञ्जलिराह—'तात, अस्त्ययं ममाऽपराधः । इदानीं यथाऽवशिष्टबलसहितः प्रत्यावृत्य विन्ध्याऽचलं गच्छामि तथोपदिश ।' गृध्रः स्वगतं चिन्तयति—'क्रियतामत्र प्रतीकारः । यतः—

देवतासु गुरौ गोषु राजसु ब्राह्मणेषु च ।
नियन्तव्यः सदा कोपो बालवृद्धातुरेषु च' ॥ ५९ ॥

मन्त्री प्रहस्य ब्रूते—देव, मा भैषीः । समाश्वसिहि । शृणु देव,

मन्त्रिणां भिन्नसंधाने भिषजां सान्निपातिके ।
कर्मणि व्यज्यते प्रज्ञा सुस्थे को वा न पण्डितः ॥ ६० ॥

तदत्र भवत्प्रतापादेव दुर्गं भङ्क्त्वा कीर्तिप्रतापसहितं त्वामचिरेण कालेन विन्ध्याचलं नेष्यामि ।' राजाऽऽह—'कथमधुना स्वल्पबलेन तत्सम्पद्यते ।' गृध्रो वदति—'देव सर्वं भविष्यति । यतो विजिगीषोरदीर्घसूत्रता विजयसिद्धेरवश्यम्भाविलक्षणम् । तत्सहसैव दुर्गाऽवरोधः क्रियताम् ।'

प्रहितप्रणिधिना बकेनाऽऽगत्य हिरण्यगर्भस्य तत्कथितम्—'देव, स्वल्पबल एवायं राजा चित्रवर्णो गृध्रस्य मन्त्रोपस्तम्भेन

कार्पण्यम् । भटः । पुरस्क्रियन्ताम् ।
आनृण्यम् ।

---

दुर्गाऽवरोधं करिष्यति ।' राजाऽऽह—'सर्वज्ञ, किमधुना विधेयम्
चक्रो ब्रूते—'स्वबले साराऽसारविचारः क्रियताम् ।' तज्ज्ञात्वा सुवर्णवस्त्राऽऽदिकं यथाऽर्हं प्रसादप्रदानं क्रियताम् ।

राजाऽऽह—'कथमिह समये ऽतिव्ययो युज्यते ।' उक्तं च—'आपदर्थे धनं रक्षेत्' इति । मन्त्री ब्रूते—'श्रीमतः कथमापदः । राजाऽऽह—'कदाचिच्चलते लक्ष्मीः ।' मन्त्री ब्रूते—'सञ्चितापि विनश्यति । तद्देव, कार्पण्यं विमुच्य दानमानाभ्यां स्वभटाः पुरस्क्रियन्ताम् । तथा चोक्तम्—

परस्परज्ञाः संहृष्टास्त्यक्तुं प्राणान्सुनिश्चिताः ।
कुलीनाः पूजिताः सम्यग्विजयन्ते द्विषद्बलम् ॥ ६१ ॥

अथाऽऽगत्य प्रणम्य मेघवर्णो ब्रूते—'देव दृष्टिप्रसादं कुरु । इदानीं विपक्षो दुर्गद्वारि वर्तते । तद्देवपादाऽऽदेशाद्बहिर्निःसृत्य स्वविक्रमं दर्शयामि । तेन देवपादानामाऽऽनृण्यमुपगच्छामि ।' चक्रो ब्रूते—'मैवम् । यदि बहिर्निःसृत्य योद्धव्यं तदा दुर्गाश्रयणमेव निष्प्रयोजनम् ।
अपरं च ।

---

१. विपूर्वान्मुञ्च धातोः क्त्वा प्रत्यये, समासे, ल्यपि च कृते-अनिदितां हल उपाधायाः क्ङिति । ६ । ४ । २४ इति नलोपः ।
२. विपराभ्यां जेः । १ ३ । १९ । इत्यात्मने पदम् ।

नक्रः । आहवः । उपजापः । चिरारोधः ।
भास्करः । सर्वतः । ह्रदाः ।

---

विषमो हि यथा नक्रः सलिलान्निर्गतो वशः ।
वनाद्विनिर्गतः शूरः सिंहोऽपि स्याच्छृगालवत् ॥ ६२ ॥

देव, स्वयं गत्वा दृश्यतां युद्धम् ।

अथ ते सर्वे दुर्गद्वारं गत्वा महाऽऽहवं कृतवन्तः । अपरेद्युश्चित्रवर्णो राजा गृध्रमुवाच—'तात स्वप्रतिज्ञातमधुना निर्वाहय ।' गृध्रो ब्रूते—'देव, शृणु तावत् ।

अकालसहमत्यल्पं मूर्खव्यसनिनायकम् ।
अगुप्तं भीरुयोधं च दुर्गव्यसनमुच्यते ॥ ६३ ॥

तत्तावदत्र नास्ति ।

उपजापश्चिरारोधोऽवस्कन्दस्तीव्रपौरुषम् ।
दुर्गस्य लङ्घनोपायाश्चत्वारः कथिता इमे ॥ ६४ ॥

अत्र यथाशक्ति क्रियते यत्नः । ( कर्णे कथयति । ) एवमेव ।' ततोऽनुदित एव भास्करे चतुर्ष्वपि दुर्गद्वारेषु वृत्ते युद्धे दुर्गाऽभ्यन्तरगृहेष्वेकदा काकैरग्निर्निक्षिप्तः । ततः 'गृहीतं गृहीतं दुर्गम्' इति कोलाहलं श्रुत्वा सर्वतः प्रदीप्ताऽग्निमवलोक्य राजहंस सैनिका दुर्गवासिनश्च सत्वरं ह्रदं प्रविष्टाः ।

---

१. दिवा विभानिशाप्रभा भास्करान्तानन्तादि बहुनान्दी किंलिपि लिबि बलि भक्ति कर्तृ चित्र क्षेत्र संख्या जङ्घा बाह्वहर्यत्तद्धनुररुष्षु । ३ । २ । २१ । इति कृञष्टः प्रत्ययः ।

वेष्टितः । दिवि । अपास्य । मुधा ।

---

राजहंसः स्वभावान्मन्दगतिः सारसद्वितीयश्चेति चित्रवर्णस्य सेनापतिना[1] कुक्कुटेनाऽऽगत्य वेष्टितः । हिरण्यगर्भः सारसमाह—'सारससेनापते, ममाऽनुरोधादात्मानं कथं व्यापादयिष्यसि । त्वमधुना गन्तुं शक्तः । तद्गत्वा जलं प्रविश्याऽत्मानं परिरक्ष । अस्मत्पुत्रं चूडामणिनामानं सर्वज्ञसम्मत्या राजानं करिष्यसि ।' सारसो ब्रूते—देव, न वक्तव्यमेवं दुःसहं वचः । यावच्चन्द्राकौं दिवि तिष्ठतस्तावद्विजयतां देवः । अहंदेव, दुर्गाऽधिकारी । मन्मांसासृग्विलिप्तेन द्वारवर्त्मना प्रविशतु शत्रुः । अपरं च ।

दाता क्षमी गुणग्राही स्वामी दुःखेन लभ्यते,

राजाह—'सत्यमेवैतत् । किंतु ।

शुचिर्दक्षोऽनुरक्तश्च जाने भृत्योऽपि दुर्लभः ॥ ६५ ॥

सारसोब्रूते—'शृणु देव,

यदि समरमपास्य नास्ति मृत्यो-
र्भयमिति युक्तमितोऽन्यतः प्रयातुम् ।
अथ मरणमवश्यमेव जन्तोः
किमिति मुधा मलिनं यशः क्रियेत ॥ ६६ ॥

देव, त्वं च स्वामी सर्वथा रक्षणीयः । यतः—

---

1. सेनायाः पतिः सेनापति स्तेन । पतिः समास एव । १ । ४ । ८ । इति घिसंज्ञा भावात्-आङोना स्त्रियाम् । ७ ।३।१२० । इत्याङो नाभावः ।

निमीलति । सरोरुहम् । खरः । आघातः ।
अन्तरितः । ग्राहयित्वा । स्कन्धावारः ।

---

प्रकृतिः स्वामिनं त्यक्त्वा समृद्धाऽपि न जीवति ।
अपि धन्वन्तरिर्वैद्यः किं करोति गतायुषि[1] ॥ ६७ ॥

अपरं च ।

नरेशे जीवलोकोऽयं निमी[2]लति निमीलति ।
उदेत्युदीयमाने च रवाविव सरोरुहम् ॥ ६८ ॥

अथ कुक्कुटेनाऽगत्य राजहंसस्य शरीरे खरतरनखाघातः कृतः। तदा सत्वरमुपसृत्य सारसेन स्वदेहाऽन्तरितो राजा जले क्षिप्तः। अथ कुक्कुटैर्नखप्रहारजर्जरीकृतेन सारसेन कुक्कुटसेना बहुशो हता। पश्चात्सारसोऽपि चञ्चुप्रहारेण विभिद्य व्यापादितः। अथ चित्रवर्णो दुर्गं प्रविश्य दुर्गाऽवस्थितं द्रव्यं ग्राहयित्वा बन्दिभिर्जयशब्दैरानन्दितः स्वस्कन्धावारं जगाम। अथ राजपुत्रैरुक्तम्—'तस्मिन्राजबले स पुण्यवान्सारस एव येन स्वदेहत्यागेन स्वामी रक्षितः उक्तं चैतत्—

जनयन्ति सुतान् गावः सर्वा एव गवाकृतीन् ।
विषाणोल्लिखितस्कन्धं काचिदेव गवां पतिम् ॥ ६९ ॥

विष्णुशर्मोवाच—'स तावद्विद्याधरीपरिजनः स्वर्गसुखमनुभवतु महासत्वः। तथा चोक्तम्—

---

१. गतमायुर्यस्येतिगतायुस्तस्मिन् ।
२. सप्तम्यर्थे कर्षवचने ।

द्विषः । क्लैव्यम् । पतिः ।

---

आहवेषु च ये शूराः स्वाम्यर्थे त्यक्तजीविताः ।
भर्तृभक्ताः कृतज्ञाश्च ते नराः स्वर्गगामिनः ॥ ७० ॥

यत्र तत्र हतः शूरः शत्रुभिः परिवेष्टितः ।
अक्षयाँल्लभते लोकान्यदि क्लैव्यं न गच्छति ॥ ७१ ॥

अपरमप्येवमस्तु ।

विग्रहः करितुरङ्गपत्तिभि-
नों कदापि भवतां महीभुजाम् ।
नीतिमन्त्रपवनैः समाहताः
संश्रयन्तु गिरिगह्वरं द्विषः ॥ ७२ ॥

## इति हितोपदेशे विग्रहो नाम तृतीयः कथासङ्ग्रहः समाप्तः ।

---

१. संहिता प्रष्टव्या ।
२. आशिषि लोट् ।

स्थेयः । परकीयः । विषमा ।
गर्हयते । अभिनन्दति ।

---

## सन्धिः ।

पुनः कथाऽऽरम्भकाले राजपुत्रैरुक्तम्—'आर्य, विग्रहः श्रुतोऽस्माभिः । सन्धिरधुनाऽभिधीयताम् ।' विष्णुशर्मणोक्तम्—'श्रूयताम् । सन्धिमपि कथयामि यस्याऽयमाद्यः श्लोकः—राजपुत्रा ऊचुः—'कथमेतत् ।' विष्णुशर्मा कथयति—

वृत्ते महति सङ्ग्रामे राज्ञोर्निहतसेनयोः[1] ।
स्थेयाभ्यां गृध्रचक्राभ्यां वाचा सन्धिः कृतः क्षणात् ॥ १ ॥

ततस्तेन राजहंसेनोक्तम्—'केनाऽस्मद्दुर्गे निक्षिप्तोऽग्निः । किं परकीयेण किंवाऽस्मद्दुर्गवासिना केनाऽपि विपक्षप्रयुक्तेन ।' चक्रो ब्रूते—'देव, भवतो निष्कारणबन्धुरसौ मेघवर्णः सपरिवारो न दृश्यते । तन्मन्ये तस्यैव विचेष्टितमिदम् । राजा क्षणं विचिन्त्याऽऽह—'अस्ति तावदेवं मम दुर्दैवमेतत् । तथा चोक्तम्—

अपराधः स दैवस्य न पुनर्मन्त्रिणामयम् ।
कार्यं सुचरितं क्वाऽपि दैवयोगाद्विनश्यति' ॥ २ ॥

मन्त्री ब्रूते—'उक्तमेवैतत् ।

---

१. निहता सेना ययोस्तयोः ।
२. स्थीयते विवादनिर्णयकतयासौ । स्था-कर्मण्ययत् ।

सरः । धीवरः । उषित्वा । व्यापादयितव्यः ।
आलापः । दृष्टव्यतिकरः ।

---

मन्त्री ब्रूते—'उक्तमेवैतत् ।

विषमां हि दशां प्राप्य दैवं गर्हयते नरः ।
आत्मनः कर्मदोषांस्तु नैव जानात्यपण्डितः ॥ ३ ॥

अपरं च ।

सुहृदां हितकामानां यो वाक्यं नाऽभिनन्दति ।
स कूर्म इव दुर्बुद्धिः काष्ठाद्भ्रष्टो विनश्यति ॥ ४ ॥

राजाऽऽह 'कथमेतत्' । मन्त्री कथयति—

## कथा १ ।

अस्ति मगधदेशे फुल्लोत्पलाऽभिधानं सरः तत्र चिरं संकट-विकटनामानौ हंसौ निवसतः । तयोर्मित्रं कम्बुग्रीवनामा कूर्मश्च प्रतिवसति । अथैकदा धीवरैरागत्य तत्रोक्तम्—'यदत्राऽस्माभिरद्योषित्वा प्रातर्मत्स्यकूर्मादयो व्यापादयितव्याः ।' तदाकर्ण्य कूर्मो हंसावाह—'सुहृदौ, श्रुतोऽयं धीवरालापः । अधुना किं मया कर्तव्यम्' । हंसावाहतुः—'ज्ञायताम् पुनस्तावत्प्रातर्यदुचितं तत्कर्तव्यम् ।' कूर्मो ब्रूते—मैवम् । 'यतो दृष्टव्यतिकरोऽहमत्र ।' तथा चोक्तम्—

---

१. वस धातोः समानकर्तृकयोः पूर्वकाले । ३ । ४ । २१ । इतिक्त्वा-प्रत्यये इडागमे कृते मृडमृदगुधकुषक्लिशवदवसः क्त्वा । १ । २ । ७ । इतिकित्वाद् वचिस्वपियजादीनां किति ६ । १ । १५ । इति सम्प्रसारणम् । गुणाभावः ।

अनागतविधाता । प्रत्युत्पन्नमतिः । आलोचितम् ।
अभावि । विषघ्नः । अगदः ।

---

'अनागतविधाता च प्रत्युत्पन्नमतिस्तथा ।
द्वावेतौ सुखमेधेते यद्भविष्यो विनश्यति' ॥ ५ ॥

तावाहतुः—'कथमेतत् ।' कूर्मः कथयति—

## कथा २ ।

पुराऽस्मिन्नेव सरस्येवंविधेषु धीवरेषूपस्थितेषु मत्स्यत्रयेणाऽऽलोचितम् । तत्राऽनागतविधाता नामैको मत्स्यः । तेनाऽऽलोचितम्— 'अहं तावज्जलाशयान्तरं गच्छामि' इत्युक्त्वा ह्रदान्तरं गतः । अपरेण प्रत्युत्पन्नमतिनाम्ना मत्स्येनाऽभिहितम् 'भविष्यदर्थे प्रमाणाभावात्कुत्र मया गन्तव्यम् । तदुत्पन्ने यथाकार्यं तदनुष्ठेयम्' ।

ततो यद्भविष्येणोक्तम्—

'यदभावि न तद्भावि भावि चेन्न तदन्यथा ।
इति चिन्ताविषघ्नोऽयमगदः किं न पीयते' ॥ ६ ॥

तत्र प्रातर्जालेन बद्धः प्रत्युत्पन्नमतिर्मृतवदात्मानं संदर्श्य स्थितः ततो जालादपसारितो यथाशक्त्युत्प्लुत्य गभीरं नीरं प्रविष्टः ।

---

१ विषं हन्ति—इति विषघ्नः । अमनुष्यकर्तृके च । ३ । २ । ५३ । इति हन्तेष्टक् ।

अपसारितः । गभीरम् । नीरम् ।
स्थलम् । वर्त्म ।

---

यद्भविष्यश्च धीवरैः प्राप्तो व्यापादितः । अतोऽहं ब्रवीमि—'अनागतविधाता' इत्यादि । तद्यथाऽहमन्यद्ध्रदं प्राप्नोमि तथा क्रियताम् ।' हंसावाहतुः—'जलाशयान्तरे प्राप्ते तत्र कुशलम् । स्थले गच्छतस्ते को विधिः ।' कूर्म आह—'यथाऽहं भवद्भ्यां सहाऽऽकाशवर्त्मना यामि तथा विधीयताम् ।' हंसौ ब्रूतः—कथमुपायः सम्भवति ।' कच्छपो वदति— 'युवाभ्यां चञ्चुधृतं काष्ठखण्डमेकं मया मुखेनाऽवलम्ब्य गन्तव्यम् । युवयोः पक्षबलेन मयाऽपि सुखेन गन्तव्यम् ।' हंसौ ब्रूतः—'सम्भवत्येष उपायः । किंतु—

'उपायं चिन्तयन्प्राज्ञो ह्यपायमपि चिन्तयेत् ।
पश्यतो बकमूर्खस्य नकुलैर्भक्षिताः प्रजाः' ॥ ७ ॥

कूर्मः पृच्छतिः 'कथमेतत्' । तौ कथयतः—

## कथा ३ ।

अस्त्युत्तरापथे[2] गृध्रकूटनाम्नि पर्वते महान्पिप्पलवृक्षः । तत्राऽनेकबका निवसन्ति । तस्य वृक्षस्याऽधस्ताद् विवरे सर्पो बालाऽपत्यानि खादति । अथ शोकार्तानां बकानां विलापं श्रुत्वा

---

१. सन्धिविभागः कार्य्यः ।

२. ऋक्पूरब्धूःपथामानक्षे । ५ । ४ । ७५ । इत्यप्रत्ययः ।

विकिरत । वृत्तम् ।
पक्त्वा । दग्ध्वा । भस्म । शोधनम् ।

केनचिद्बकेनाऽभिहितम्— 'एवं कुरुत । यूयं मत्स्यानुपादाय नकुलविवरादारभ्य सर्पविवरं यावत्पङ्क्तिक्रमेण विकिरत[1] ततस्तदाहारलुब्धैर्नकुलैरागत्य सर्पो द्रष्टव्यः स्वभावद्वेषाद्व्यापादयितव्यश्च' तथाऽनुष्ठिते तद्वृत्तम् । ततस्तत्र वृत्ते नकुलैर्बकशावकशावः श्रुतः । पश्चात्तैर्वृक्षमारुह्य बकशावकाः खादिताः । अत आवां ब्रूवः—'उपायं चिन्तयन्' इत्यादि । आवाभ्यां नीयमानं त्वामवलोक्य लोकैः किंचिद्वक्तव्यमेव । तदाकर्ण्य यदि त्वमुत्तरं दास्यसि तदा त्वन्मरणम् । तत्सर्वथाऽत्रैव स्थीयताम् ।' कूर्मो वदति—'किमहमप्राज्ञः । नाऽहमुत्तरं दास्यामि । किमपि न वक्तव्यम् ।' तथाऽनुष्ठिते तथाविधं कूर्ममालोक्य सर्वे गोरक्षकाः पश्चाद्धावन्ति वदन्ति च । कश्चिद्वदति— 'यद्ययं कूर्मः पतति तदात्रैव पक्त्वा खादितव्यः ।' कश्चिद्वदति—'अत्रैव दग्ध्वा खादितव्योऽयम् ।' कश्चिद्वदति—'गृहं नीत्वा भक्षणीयः ।' इति तद्वचनं श्रुत्वा स कूर्मः कोपाऽऽविष्टो विस्मृतपूर्वसंस्कारः प्राह—'युष्माभिर्भस्म[2] भक्षितव्यम्' इति वदन्नेव पतितस्तैर्व्यापादितश्च । अतोऽहं ब्रवीमि—'सुहृदां हितकामानाम्' इत्यादि । अथ प्रणिधिर्बकस्तत्राऽऽगत्योवाच—'देव, प्रागेव मया निगदितम् । दुर्गशोधनं हि

१. कॄ विक्षेपे, लोटि मध्यमपुरुषबहुवचनम् ।

२. क्लीबे प्रथमैकवचनम् ।

प्रतिज्ञाणं कर्तव्यमिति । तच्च युष्माभिर्न कृतं तदनवधानस्य फलमनुभूतम् । दुर्गदाहो मेघवर्णेन वायसेन गृध्रप्रयुक्तेन कृतः ।' राजा निःश्वस्याऽऽह—

'प्रणयादुपकाराद्वा यो विश्वसिति शत्रुषु ।
स सुप्त इव वृक्षाग्रात्पतितः प्रतिबुद्ध्यते ॥ ८ ॥'

प्रणिधिरुवाच—'इतो दुर्गदाहं विधाय यदा गतो मेघवर्णस्तदा चित्रवर्णेन प्रसादितेनोक्तम्— 'अयं मेघवर्णोऽत्र कर्पूरद्वीपराज्येऽभिषिच्यताम् । तथा चोक्तम् ।

'कृतकृत्यस्य भृत्यस्य कृतं नैव प्रणाशयेत् ।
फलेन मनसा वाचा दृष्ट्याचैनं प्रहर्षयेत् ॥ ६ ॥'

'चक्रवाको ब्रूते—'ततस्ततः ।' प्रणिधिरुवाच-'ततः प्रधानमन्त्रिणा गृध्रेणाऽभिहितम्— देव, नेदमुचितम् । प्रसादान्तरं किमपि क्रियताम् । यतः ।

अविचारयतो युक्तिकथनं तुषखण्डनम् ।
नीचेषूपकृतं राजन्वालुकास्विव मूत्रितम् ॥ १० ॥

महतामास्पदे[1] नीचः कदापि न कर्तव्यः । तथा चोक्तम्—

नीचः श्लाघ्यपदं प्राप्य स्वामिनं हन्तुमिच्छति ।
मूषिको व्याघ्रतां प्राप्य मुनिं हन्तुं गतो यथा ॥ ११ ॥

---

१. आस्पदं प्रतिष्ठायाम् । ६ । १ । १४६ । आत्मयापनाय स्थाने सुट् निपात्यते ।

मूषिकः । शावकः । नीवारकणः ।
मार्जारः । आख्यानम् ।

---

चित्रवर्णः पृच्छति—'कथमेतत् ।' मन्त्री कथयति—

## कथा ४

अस्ति गौतमस्य महर्षेस्तपोवने महातपा नाम मुनिः । तेन मुनिना काकेन नीयमानो मूषिकशावको दृष्टः । ततः स्वभावदयात्मना तेन मुनिना नीवारकणैः संवर्धितः । ततो विडालस्तं मूषिकं खादितुमुपधावति । तमवलोक्य मूषिकस्तस्य मुनेः क्रोडे प्रविवेश । ततो मुनिनोक्तम्—'मूषिक त्वं मार्जारो भव ।' ततः स विडालः कुक्कुरं दृष्ट्वा पलायते । ततो मुनिनोक्तम्—'कुक्कुराद्बिभेषि । त्वमेव कुक्कुरो भव ।' स च कुक्कुरो व्याघ्राद्बिभेति ततस्तेन मुनिना कुक्कुरो व्याघ्रः कृतः । अथ तं व्याघ्रं मुनिर्मूषिकोऽयमिति पश्यति । अथ तं मुनिं दृष्ट्वा व्याघ्रं च सर्वे वदन्ति—'अनेन मुनिना मूषिको व्याघ्रतां नीतः ।' एतच्छ्रुत्वा स व्याघ्रोऽचिन्तयत्—'यावदनेन मुनिना स्थातव्यं तावदिदं मे स्वरूपाऽऽख्यानमकीर्तिकरं न पलायिष्यते' इत्यालोच्य मूषिकस्तं मुनिं हन्तुं गतः । ततो मुनिना तज्ज्ञात्वा, पुनर्मूषिको

---

१. परा पूर्वस्याऽयते; उपसर्गस्यायतौ । ८ ।२ । १९ । इत्युपसर्गरेफस्य लत्वम् ।

२. भीत्रार्थानां भयहेतुः । १ । ४ । २५ । इत्यपादानसंज्ञायाम्-अपादाने पञ्चमी । २ । ३ । २८ । इति पञ्चमी ।

कर्कटकः। कैवर्तः। लक्ष्यते।

---

भव, इत्युक्त्वा मूषिक एव कृतः। अतोऽहं ब्रवीमि—'नीचः श्लाघ्यपदम्' इत्यादि। अपरं च सुकरमिदमिति न मन्तव्यम्। शृणु।

> भक्षयित्वा बहून्मत्स्यानुत्तमाऽधममध्यमान्।
> अतिलोभाद्बकः पश्चान्मृतः कर्कटकग्रहात्' ॥ ११ ॥

चित्रवर्णः पृच्छति—'कथमेतत्।' मन्त्री कथयति—

## कथा ५।

अस्ति मालवदेशे पद्मगर्भनामधेयं सरः। तत्रैको वृद्धो बकः सामर्थ्यहीन उद्विग्नमिवाऽऽत्मानं दर्शयित्वा स्थितः। स च केनचित्कुलीरेण दृष्टः पृष्टश्च—'किमिति भवानत्राऽऽहारत्यागेन तिष्ठति।'

बकेनोक्तम्— 'मत्स्या मम जीवनहेतवः। ते कैवर्तैरागत्य व्यापादयितव्या इति वार्ता नगरोपान्ते मया श्रुता। अतो वर्तनाऽभावादेवाऽस्मन्मरणमुपस्थितमिति ज्ञात्वाऽऽहारेऽप्यनादरः कृतः। ततो मत्स्यैरालोचितम्। इह समये तावदुपकारक एवाऽयं लक्ष्यते। तदयमेव यथाकर्तव्यं पृच्छ्यताम्। तथा चोक्तम्—

---

१. उपाहकरोतेः—ण्वुल्तृचौ। ३।१।१३३। इति ण्वुल्तृचौ प्रत्ययौ।

उपकर्ता । एकैकशः । ग्रीवा । अचलः ।

---

उपकर्त्राऽरिणा सन्धिर्न मित्रेणाऽपकारिणा ।

उपकाराऽपकारौ हि लक्ष्यं लक्षणमेतयोः ॥ १३ ॥

मत्स्या ऊचुः 'भो बक, कोऽत्र रक्षणोपायः ।' बको ब्रूते— अस्ति रक्षणोपायो जलाशयान्तराऽऽश्रयणम् । तत्राऽहमेकैकशो युष्मान्नयामि । मत्स्या आहुः—'एवमस्तु ।' ततोऽसौ बकस्तान्मत्स्यानेकैकशो नीत्वा खादति । अनन्तरं कुलीरकस्तमुवाच— 'भो बक, मामपि तत्र नय ।' ततो बकोऽप्यपूर्वकुलीरकमांसार्थी सादरं तं नीत्वा स्थले धृतवान् । कुलीरकोऽपि मत्स्यकण्टकाकीर्णं तत्स्थलमालोक्याऽचिन्तयत्—'हा, हतोऽस्मि मन्दभाग्यः । भवतु । इदानीं समयोचितं व्यवहरिष्यामि' इत्याऽऽलोच्य कुलीरकस्तस्य ग्रीवां चिच्छेद । स बकः पञ्चत्वं गतः । अतोऽहं ब्रवीमि—'भक्षयित्वा बहून्मत्स्यान्' इत्यादि । ततश्चित्रवर्णोऽवदत् , शृणु तावन्मन्त्रिन् , मयैतदालोचितमस्ति । अत्राऽवस्थितेन मेघवर्णेन राज्ञा यावन्ति वस्तूनि कर्पूरद्वीपस्योत्तमानि तावन्त्यस्माकमुपनेतव्यानि तेनाऽस्माभिर्महासुखेन विन्ध्याचले स्थातव्यम् ।' दूरदर्शी विहस्याऽऽह—'देव,

अनागतवतीं चिन्तां कृत्वा यस्तु प्रहृष्यति ।

स तिरस्कारमाप्नोति भग्नभाण्डो द्विजो यथा' ॥ १४ ॥

विषुवत् । सक्तुः । मण्डपः । आकुलितः । विक्रीय ।
कपर्दकः । शरावः । उपक्रीय । पूगः । सपत्नी ।
चूर्णितः । भग्नम् ।

---

## कथा ६ ।

अस्ति देवीकोट्टनाम्नि नगरे देवशर्मा नाम ब्राह्मणः । तेन महाविषुवत्संक्रान्त्यां सक्तुपूर्णशराव एकः प्राप्तः । तमादायाऽसौ कुम्भकारस्य भाण्डपूर्णमण्डपैकदेशे रौद्रेणाऽऽकुलितः सुप्तः । ततः सक्तुरक्षार्थं हस्ते दण्डमेकमादायाऽचिन्तयत्—यद्यहं सक्तुशरावं विक्रीय दशकपर्दकान्प्राप्स्यामि तदाऽत्रैव तैः कपर्दकैर्घटशरावादिकमुपक्रीयाऽनेकधा वृद्धैस्तद्धनैः पुनः पुनः पूगवस्त्रादिकमुपक्रीय विक्रीय लक्षसंख्यानि धनानि कृत्वा विवाहचतुष्टयं करिष्यामि । अनन्तरं तासु सपत्नीषु रूपयौवनवती या तस्यामधिकाऽनुरागं करिष्यामि । सपत्न्यो यदा द्वन्द्वं करिष्यन्ति तदा कोपाकुलोऽहं ता लगुडेन ताडयिष्यामि' इत्यभिधाय लगुडः क्षिप्तः । तेन सक्तुशरावश्चूर्णितो भाण्डानिच बहूनि भग्नानि । ततस्तेन शब्देनाऽऽगतेन कुम्भकारेण तथाविधानि भाण्डान्यवलोक्य ब्राह्मणस्तिरस्कृतो मण्डपाद्बहिष्कृतश्च । अतोऽहं ब्रवीमि—'अनागतवतीं चिन्ताम्'

---

१. संख्याया अवयवे तयप् । ५ । २ । ४२ । इति तयप् ।
२. समानः पति र्यासां ताः सपत्न्यः । नित्यं सपत्न्यादिषु । ४ । १ । ३५ । समानस्य सभावो निपात्यते-पति शब्दान्तस्य च नो-ङीप् च ।

संकीर्णम् । उन्मार्गः । वाच्यताम् ।
परभूमिष्ठः । दुर्गः । चन्द्रशेखरः ।

---

इत्यादि ॥ ततो राजा रहसि गृध्रमुवाच—'तात, यथा कर्तव्यं तथोपदिश ।' गृध्रो ब्रूते—

'मदोद्धतस्य नृपतेः संकीर्णस्येव दन्तिनः ।
गच्छन्त्युन्मार्गयातस्य नेतारः खलु वाच्यताम् ॥ ४ ॥

शृणु देव, किमस्माभिर्बलदर्पाद्दुर्गं भग्नम् । न । किन्तु तव प्रतापाऽधिष्ठितेनोपायेन । राजाऽऽह 'नहि नहि भवतामुपायेन ।' गृध्रो ब्रूते—'यद्यस्मद्वचनं क्रियते तदा स्वदेशे गम्यताम् । अन्यथा वर्षाकाले प्राप्ते पुनर्विग्रहे सत्यस्माकं परभूमिष्ठानां स्वदेशगमनमपि दुर्लभं भविष्यति । सुखशोभार्थं संधाय गम्यताम् । दुर्गं भग्नं कीर्तिश्च लब्धैव । मम संमतं तावदेतत् । यतः ।

संधिमिच्छेत्समेनापि संदिग्धो विजयो युधि ।
सुन्दोपसुन्दावन्योऽन्यं नष्टौ तुल्यबलौ न किम्' ॥ १९ ॥

राजावोच—'कथमेतत्' । मन्त्री कथयति—

## कथा ७ ।

पुरा दैत्यौ महोदारौ सुन्दोपसुन्दनामानौ महता क्लेशेन त्रैलोक्यकामनया चिराच्चन्द्रशेखरमाराधितवन्तौ । ततस्तयोर्भ-

वरयतम् । समधिष्ठिता । लावण्यम् ।

जगद्घाती । प्रमाणपुरुषः । भट्टारकः ।

---

गवान्परितुष्टः 'वरं वरयतम्' इत्युवाच । अनन्तरं तयोः समधिष्ठितया सरस्वत्या तावन्यद्वक्तुकामावन्यदभिहितवन्तौ । 'यद्यावयोर्भगवान्परितुष्टस्तदा स्वप्रियां पार्वतीं परमेश्वरो ददातु ।'[१] अथ भगवता क्रुद्धेन वरदानस्यावश्यकतया विचारमूढयोः पार्वती प्रदत्ता । ततस्तस्या रूपलावण्यलुब्धाभ्यां जगद्घातिभ्यां[२] मनसोत्सुकाभ्यां पापतिमिराभ्यां ममेयमित्यन्योन्यकलहाभ्यां प्रमाणपुरुषः कश्चित्पृच्छ्यतामिति मतौ कृतायां स एव भट्टारको वृद्धद्विजरूपः समागत्य तत्रोपस्थितः । अनन्तरम् । 'आवाभ्यामियं स्वबललब्धा, कस्येयमावयोर्भवति' इति ब्राह्मणमपृच्छताम् । ब्राह्मणो ब्रूते—

वर्णश्रेष्ठो द्विजः पूज्यः क्षत्रियो बलवानपि ।

धनधान्याऽधिको वैश्यः शूद्रस्तु द्विजसेवया ॥ १६ ॥

तद्युवां क्षत्रधर्माऽनुरागौ । युद्ध एव युवयोर्नियमः । इत्यभिहिते सति 'साधूक्तमनेन' इति कृत्वाऽन्योऽन्यतुल्यवीर्यौ

---

१. सन्धिविभागः कार्यः ।

२. जगद्घ हतवन्तौ-जगद्घातिनौ ताभ्यां जगद्घातिभ्याम् । कर्मणि हनः । ३ । २ । ८६ । इतिणिनिः ।

अवसानम् । सन्धेयः । विग्राह्यः ।

उपेतः । व्यपेतः । विक्रिया । विनिपातः ।

---

समकालमन्योन्यघातेन विनाशमुपगतौ । अतोऽहं ब्रवीमि— 'संधिमिच्छेत्समेनापि' इत्यादि ॥ राजाऽऽह — 'प्रागेव किं नोक्तं भवद्भिः ।' मन्त्री ब्रूते—'मद्वचनं किमवसानपर्यन्तं श्रुतं भवद्भिः । तदापि मम संमत्या नायं विग्रहाऽऽरम्भः । सन्धेयगुणयुक्तोऽयं हिरण्यगर्भो न विग्राह्यः । तत्र तावद्बहुभिर्गुणैरुपेतः संधेयोऽयं राजा ।' चक्रवाकोऽवदत्— 'प्रणिधे, अन्यत्र व्रज । सर्वमवगतम् । गत्वा पुनरागमिष्यसि ।' राजा चक्रवाकं पृष्टवान्—'मन्त्रिन् , असंधेयः कः । तच्छ्रोतुमिच्छामि ।' मन्त्री ब्रूते—'देव, कथयामि । शृणु ।

सत्यधर्मव्यपेतेन संदध्यान्न कदाचन ।
स संधितोऽप्यसाधुत्वादचिराद्याति विक्रियाम् ॥ १७ ॥

अपरमपि कथयामि । संधिविग्रहयानाऽऽसनसंश्रयद्वैधीभावाः षड्गुणयम् । कर्मणामारम्भोपायः, पुरुषद्रव्यसंप, देशकालविभागो, विनिपातप्रतीकारः, कार्यसिद्धिश्च, पञ्चांगो मन्त्रः । सामदानभेददण्डाश्चत्वार उपायाः । उत्साहशक्तिर्मन्त्रशक्तिः प्रभुशक्तिश्चेति शक्तित्रयम् । एतत्सर्वमालोच्य नित्यं विजिगीषवो भवन्ति महान्तः ।

सुगुप्तिः । अरातिः । उषितः ।

---

या हि प्राणपरित्यागमूल्येनाऽपि न लभ्यते ।
सा श्रीर्नीतिविदं पश्य चञ्चलाऽपि प्रधावति ॥ १८ ॥

किंतु देव, यद्यपि महामन्त्रिणा गृध्रेण संधानमुपन्यस्तं तथापि तेन राज्ञा संप्रति भूतजयदर्पान्न मन्तव्यम् । तदेवं क्रियताम् सिंहलद्वीपस्य महाबलो नाम सारसो राजाऽस्मन्मित्रं जम्बुद्वीपे कोपं जनयतु । यतः ।

सुगुप्तिमाधाय सुसंहतेन
बलेन वीरो विचरन्नरातिम् ।
संतापयेद्येन समं सुतप्त-
स्तप्तेन संधानमुपैति[1] तप्तः' ॥ १९ ॥

राज्ञा 'एवमस्तु' इति निगद्य विचित्रनामा बकः सुगुप्तलेखं दत्त्वा सिंहलद्वीपं प्रहित ॥

अथ प्रणिधिरागत्योवाच—'देव, श्रूयतां तत्रत्यप्रस्तावः । एवं तत्र गृध्रेणोक्तम् – 'देव, यन्मेघवर्णस्तत्र चिरमुषितः स वेत्ति किं संधेयगुणयुक्तो हिरण्यगर्भो न वा' इति । ततोऽसौ राज्ञा समाहूय पृष्टः—'वायस, कीदृशोऽसौ हिरण्यगर्भः । चक्रवाको मन्त्री वा कीदृशः ।' वायस उवाच—देव, हिरण्यगर्भो राजा युधिष्ठिरसमो महाशयः । चक्रवाकसमो मन्त्री न क्वाप्यवलो-

---

१. एत्येधत्यूठ्सु । ६ । १ । ८९ । इति पररूपगुणापवादा वृद्धिः ।

वञ्चनम् । विदग्धता । आत्मौपम्यम् ।
छागः । प्रकर्षः । कुक्कुरः ।

---

च्यते ।' राजाऽऽह— 'यद्येवं तदा कथमसौ त्वया वञ्चितः ।' विहस्य मेघवर्णः प्राऽऽह—'देव,

विश्वासप्रतिपन्नानां वञ्चने का विदग्धता[1] ।
अङ्कमारुह्य सुप्तं हि हत्वा किं नाम पौरुषम् ॥ २० ॥

शृणु देव, तेन मन्त्रिणाऽहं प्रथमदर्शन एव ज्ञातः । किंतु महाशयोऽसौ राजा । तेन मया स विप्रलब्धः । तथा चोक्तम्—

आत्मौपम्येन यो वेत्ति दुर्जनं सत्यवादिनम् ।
स तथा वञ्च्यते धूर्तैर्ब्राह्मणश्छागतो यथा' ॥ २१ ॥

राजोवाच—'कथमेतत् ।' मेघवर्णः कथयति—

## कथा ८ ।

अस्ति गौतमस्यारण्ये प्रस्तुतयज्ञः कश्चिद्ब्राह्मणः । स च यज्ञार्थं ग्रामान्तराच्छागमुपक्रीय स्कन्धे नीत्वा गच्छन्धूर्तत्रयेणाऽवलोकितः । ततस्ते धूर्ता यद्येष च्छागः केनाऽप्युपायेन लभ्यते तदा मतिप्रकर्षो भवतीति समालोच्य वृक्षत्रयतले क्रोशान्तरेण तस्य ब्राह्मणस्याऽऽगमनं प्रतीक्ष्य पथि स्थिताः । तत्रैकेन धूर्तेन गच्छन्स ब्राह्मणोऽभिहितः—'भो ब्राह्मण, किमिति कुक्कुरः

---

१. विदग्धस्य भावो विदग्धता—तस्यभावस्त्वतलौ ५ । १ । ११९ । इति तल् प्रत्ययः । तलन्तः स्त्रियाम् ।

उह्यते । दोलायमाना । दोलायते । खलम् ।
जम्बुकः । सार्थः । वैकल्यम् । भूरिः । व्यग्रम् ।

---

स्कन्धेनोह्यते[1] ।' त्रिमेणोक्तम्—'नाऽयं श्वा, किंतु यज्ञच्छागः ।'
अथाऽनन्तरस्थितेनाऽन्येन धूर्तेन तथैवोक्तम् । तदाऽऽकर्ण्य
ब्राह्मणश्छागं भूमौ निधाय मुहुर्मुहुर्निरीक्ष्य पुनः स्कन्धे कृत्वा
दोलायमानमतिश्चलितः । यतः ।

मतिर्दोलायते[2] सत्यं सतामपि खलोक्तिभिः ।
ताभिर्विश्वासितश्चाऽसौ म्रियते चित्रकर्णवत्' ॥ २२ ॥

राजाऽऽह—'कथमेतत्' स कथयति—

## कथा ९ ।

अस्ति कस्मिंश्चिद्वनोद्देशे मदोत्कटो नाम सिंहः । तस्य
सेवकास्त्रयः काको व्याघ्रो जम्बुकश्च । अथ तैर्भ्रमद्भिः कश्चि-
दुष्ट्रो दृष्टः पृष्टश्च—'कुतो भवानागतः । सार्थाद्भ्रष्टः स
चाऽऽत्मवृत्तान्तमकथयत् । ततस्तैर्नीत्वा सिंहेऽसौ समर्पितः ।
तेनाऽभयवाचं दत्त्वा चित्रकर्ण इति नाम कृत्वा स्थापितः ।
अथ कदाचित्सिंहस्य शरीरे वैकल्याद्भूरिवृष्टिकारणाच्चाऽऽहार-
मलभमानास्ते व्यग्रा बभूवुः । ततस्तैरालोचितम्—'चित्रकर्ण-

---

१. वह धातोः—सार्वधातुके यक् । ३ । १ । ६७ । इति यकि सति वचिस्वपियजादीनां किति । ६ । १ । १५ । इति सम्प्रसारणम् ।

२. दोलेवाचरतीति दोलायते— कर्तुः क्यङ् सलोपश्च । ३ । १ । ११ । इत्याचारेऽर्थे क्यङ् ।

कण्टकभुक् । परिक्षीणः । महिला । भुजगी ।

मेव यथा स्वामी व्यापादयति तथाऽनुष्ठीयताम् । किमनेन कण्टक[1]भुजा । व्याघ्र उवाच— 'स्वामिनाऽभयवाचं दत्त्वाऽनुगृहीतः' तत्कथमेवं संभवति । काको ब्रूते— 'इह समये परिक्षीणः स्वामी पापमपि करिष्यति । यतः—

त्यजेत्क्षुधार्ता महिला स्वपुत्रं,
खादेत्क्षुधार्ता भुजगी स्वमण्डम् ।

बुभुक्षितः किं न करोति पापं,
क्षीणा नरा निष्करुणा भवन्ति ॥ २३ ॥

इति संचिन्त्य सर्वे सिंहाऽन्तिकं जग्मुः । सिंहेनोक्तम्— 'आहारार्थं किंचित्प्राप्तम् ।' तैरुक्तम् 'यत्नादपि न प्राप्तं किंचित् ।' सिंहेनोक्तम्—'कोऽधुना जीवनोपायः ।' काको वदति—'देव स्वाधीनाऽऽहारपरित्यागात्सर्वनाशोऽयमुपस्थितः ।' सिंहेनोक्तम्—'अत्राऽऽहारः कः स्वाधीनः ।' काकः कर्णे कथयति— 'चित्रकर्ण इति ।' सिंहो भूमिं स्पृष्ट्वा कर्णौ स्पृशति । 'अभयवाचं दत्वा धृतोऽयमस्माभिः । तत्कथमेवं संभवति । तथा च ।

१. कण्टकानि भुङ्क्ते-कण्टकभुक्-तेन कण्टकभुजा । क्विप्च । ३ । २ । ७६ । इति क्विप् ।

भूः । कूटः । उपवासः । खिन्नः
प्रकृतिः । कुक्षिः । विदार्य ।

---

न भूप्रदानं न सुवर्णदानं
न गोप्रदानं न तथान्नदानम् ।
यथा वदन्तीह महाप्रदानं
सर्वेषु दानेष्वभयप्रदानम् ॥ २४ ॥

काको ब्रूते—'नाऽसौ स्वामिना व्यापादयितव्यः । किंचाऽस्माभिरेव तथा कर्तव्यं यथाऽसौ स्वदेहदानमङ्गीकरोति ।' सिंहस्तच्छ्रुत्वा तूष्णीं स्थितः । ततोऽसौ लब्धावकाशः कूटङ्कृत्वा सर्वानादाय सिंहान्तिकं गतः । अथ काकेनोक्तम्—'देव यत्नादप्याहारो न प्राप्तः । अनेकोपवासखिन्नः स्वामी । तदिदानीं मदीयमांसमुपभुज्यताम् । यतः ।

स्वामिमूला भवन्त्येव सर्वाः प्रकृतयः खलु ।
समूलेष्वपि वृक्षेषु प्रयत्नः सफलो नृणाम् ॥ २५ ॥'

सिंहेनोक्तम्—'वरं प्राणपरित्यागः । न पुनरीदृशि कर्मणि प्रवृत्तिः ।' जम्बुकेनाऽपि तथोक्तम् । ततः सिंहेनोक्तम्—'मैवम् ।' अथ व्याघ्रेणोक्तम्—'मद्देहेन जीवतु स्वामी ।' सिंहेनोक्तम्—'न कदाचिदेवमुचितम् ।' अथ चित्रकर्णोऽपि जातविश्वासस्तथैवाऽऽत्मदानमाह । ततस्तद्वचनात्तेन व्याघ्रेणाऽसौ कुक्षिं विदार्य व्यापादितः सर्वैर्भक्षितः । अतोऽहं

---

१. वा पदान्तस्य । ८ । ४ । ५९ । इति परसवर्णः ।

अनुनयः । मूर्द्धा । इन्धनम् । क्षालयन्
जीर्णः । अन्वेष्टुम् ।

---

ब्रवीमि—'मतिर्दोलायते सत्यम्' इत्यादि । ततस्तृतीयधूर्तवचनं श्रुत्वा स्वमतिभ्रमं निश्चित्य छागं त्यक्त्वा ब्राह्मणः स्नात्वा गृहं ययौ । स छागस्तैर्धूर्तैर्नीत्वा भक्षितः । अतोऽहं ब्रवीमि—'आत्मौपम्येन यो वेत्ति' इत्यादि । राजाऽऽह— 'मेघवर्ण, कथं शत्रुमध्ये त्वया चिरमुषितम् । कथं वा तेषामनुनयः कृतः । मेघवर्ण उवाच— 'देव, स्वामिकार्यार्थिना स्वप्रयोजनवशाद्वा किं न क्रियते । पश्य—

लोको वहति किं राजन्न मूर्ध्ना दग्धुमिन्धनम् ।
क्षालयन्नपि वृक्षाङ्घ्रिं नदीवेगो निकृन्तति ॥ २६ ॥

तथा चोक्तम्—

स्कन्धेनाऽपि वहेच्छत्रून्कार्यमासाद्य बुद्धिमान् ।
यथा वृद्धेन सर्पेण मण्डूका विनिपातिताः ॥ ७ ॥

राजाऽऽह—'कथमेतत्' । मेघवर्णः कथयति—

## कथा १० ।

अस्ति जीर्णोद्याने मन्दविषो नाम सर्पः । सोऽतिजीर्णतयाऽऽहारमप्यन्वेष्टुमक्षमः सरस्तीरे पतित्वा स्थितः । ततो दूरादेव केनचिन्मण्डूकेन दृष्टः पृष्टश्च— 'किमिति त्वमाहारं नाऽन्विष्यसि ।' सर्पोऽवदत्— 'गच्छ भद्र, मम मन्दभाग्यस्य

श्रोत्रियः । लुलोठ । स्नातकः । धात्री ।

प्रपञ्चः । अपयाति ।

---

प्रश्नेन किम् ।' ततः संजातकौतुकः स च भेकः—'सर्वथा कथ्यताम्' इत्याह । सर्पोऽप्याह 'भद्र, ब्रह्मपुरवासिनः श्रोत्रियस्य[1] कौण्डिन्यस्य पुत्रो विंशतिवर्षीयः सर्वगुणसंपन्नो दुर्दैवान्मया नृशंसस्वभावेन दष्टः । तं पुत्रं सुशीलनामानं मृतमालोक्य मूर्छितः कौण्डिन्यः पृथिव्यां लुलोठ । अनन्तरं ब्रह्मपुरवासिनः सर्वे बान्धवास्तत्राऽऽगत्योपविष्टाः । तत्र कपिलो नाम स्नातकोऽवदत्—'अरे कौण्डिन्य, मूढो[2]ऽसि तेनैवं विलपसि । शृणु ।

क्रोडीकरोति प्रथमं यथा जातमनित्यता ।
धात्रीव[3] जननी पश्चात्तथा शोकस्य कः क्रमः ॥ २८ ॥

क्व गताः पृथिवीपालाः ससैन्यबलवाहनाः ।
वियोगसाक्षिणी येषां भूमिरद्यापि तिष्ठति ॥ २९ ॥

अतः संसारं विचारय । शोकोऽयमज्ञानस्य प्रपञ्चः । पश्य ।

अज्ञानं कारणं न स्याद्वियोगो यदि कारणम् ।
शोको दिनेषु गच्छत्सु वर्धतामपयाति किम् ॥ ३० ॥

---

१. छन्दोऽधीते वेत्ति वा-श्रोत्रियः । श्रोत्रियश्छन्दोऽधीते । ५ । २ । ८४ । इति छन्दसः घः श्रोत्रादेशश्च ।

२. ढ्रलोपे पूर्वस्य दीर्घोऽणः । ६ । ३ । १११ । इतिदीर्घः ।

३. धीयते-पीयते-इति धात्री । धः कर्मणि ष्ट्रन् । ३ । २ । १८१ । इति धेटः कर्मणि ष्ट्रन् । ऋन्नेभ्यो ङीप् । ४ । १ । ५ । इतिङीप् ।

अनुसन्धेहि । अकाण्डम् । गात्रम् ।
मर्मभेदी । प्रबुद्धः । भेषजम् ।

---

तदत्रात्मानमनुसंधेहि । शोकचर्चां परिहर ।

> अकाण्डपातजातानां गात्राणां मर्मभेदिनाम् ।
> गाढशोकप्रहाराणामचिन्तैव महौषधी ॥ ३१ ॥'

ततस्तद्वचनं निशम्य प्रबुद्ध इव कौण्डिन्य उत्थायाऽब्रवीत्— 'तदलमिदानीं गृहनरकवासेन । वनमेव गच्छामि ।' कपिलः पुनराह—

> 'वनेऽपि दोषाः प्रभवन्ति रागिणां
> गृहेऽपि पञ्चेन्द्रियनिग्रहस्तपः ।
> अकुत्सिते कर्मणि यः प्रवर्तते
> निवृत्तरागस्य गृहं तपोवनम् ॥ ३२ ॥

अन्यच्च ।

> दुःखमेवास्ति न सुखं यस्मात्तदुपलक्ष्यते ।
> दुःखार्तस्य प्रतीकारे सुखसंज्ञा विधीयते ॥ ३३ ॥'

कौण्डिन्यो ब्रूते—'एवमेव' । ततोऽहं तेन शोकाकुलेन ब्राह्मणेन शप्तः—'यदद्याऽऽरभ्य मण्डूकानां वाहनं भविष्यसि' इति । कपिलो ब्रूते—'संप्रत्युपदेशासहिष्णुर्भवान् । शोकाविष्टं ते हृदयम् । तथापि कार्यं शृणु ।

> सङ्गः सर्वात्मना त्याज्यः स चेत्त्यक्तुं न शक्यते ।
> स सद्भिः सह कर्तव्यः सतां संगो हि भेषजम् ॥ ३४ ॥

वोढुम् । चित्रपदक्रमः । परेद्युः ।
विरहः । पुरावृत्तम् ।

---

एतच्छ्रुत्वा स कौण्डिन्यः कपिलोपदेशामृतप्रशान्तशोकानलो यथाविधि दण्डग्रहणं कृतवान् । अतो ब्राह्मणशापान्मण्डूकान्वोढुमत्र तिष्ठामि' । अनन्तरं तेन मण्डूकेन गत्वा मण्डूकनाथस्य जालपादनाम्नोऽग्रे तत्कथितम् । ततोऽसावागत्य मण्डूकनाथस्तस्य सर्पस्य पृष्ठमारूढवान् । स च सर्पस्तं पृष्ठे कृत्वा चित्रपदक्रमं बभ्राम । परेद्युश्चलितुमसमर्थं तं मण्डूकनाथोऽवदत्—'किमद्य भवान्मन्दगतिः । सर्पो ब्रूते—'देव, आहारविरहादसमर्थोऽस्मि ।' मण्डूकनाथोऽवदत्— 'अस्मदाज्ञया मण्डूकान्भक्षय ।' ततः 'गृहीतोऽयं महाप्रसादः' इत्युक्त्वा क्रमशो मण्डूकान्खादितवान् । अतो निर्मण्डूकं सरो विलोक्य मण्डूकनाथोऽपि तेन खादितः । अतोऽहं ब्रवीमि— 'स्कन्धेनाऽपि वहेच्छत्रून्' इत्यादि । 'देव, यात्विदानीं पुरावृत्ताऽऽख्यानकथनम् । सर्वथा संधेयोऽयं हिरण्यगर्भो राजा संधीयतामिति मे मतिः ।'
राजोवाच—'कोऽयं भवतो विचारः, यतो जितस्तावदयमस्माभिस्ततो यद्यस्मत्सेवया वसति तदास्ताम् । नो चेद्विगृह्यताम् ।'

अत्राऽन्तरे जम्बूद्वीपादागत्य शुकेनोक्तम्—देव, सिंहलद्वीपस्य सारसो राजा संप्रति जम्बूद्वीपमाक्रम्याऽवतिष्ठते[1] ।' राजा ससंभ्रमं ब्रूते— 'किं किम् ।' शुकः पूर्वोक्तं कथयति । गृध्रः

---

१. समवप्रविभ्यः स्थः । १ । ३ । २२ । इत्यवात्तिष्ठतेरात्मनेपदम् ।

शरत्। उरगः। प्रसूता। पार्वणश्राद्धम्।

स्वगतमुवाच— 'साधु रे चक्रवाक मन्त्रिन् सर्वज्ञ, साधु साधु।' राजा सकोपमाह—'आस्तां तावदयम्। गत्वा तमेव समूलमुन्मूलयामि।' दूरदर्शी विहस्याऽऽह—

'न शरन्मेघवत्कार्यं वृथैव घनगर्जितम्।
परस्याऽर्थमनर्थं वा प्रकाशयति नो महान्॥ ३५॥

अपरं च।

एकदा न विगृह्णीयाद् बहून्राजाऽभिघातिनः।
सदर्पोऽप्युरगः कीटैर्बहुभिर्नाश्यते ध्रुवम्॥ ३६॥

देव, किमिति विना संधानं गमनमस्ति। यतस्तदास्मत्पश्चात्प्रकोपोऽनेन कर्तव्यः। अपरं च।

योऽर्थतत्त्वमविज्ञाय क्रोधस्यैव वशं गतः।
स तथा तप्यते मूढो ब्राह्मणो नकुलाद्यथा'॥ ३७॥

राजाऽऽह—'कथमेतत्।' दूरदर्शी कथयति—

## कथा ११।

अस्त्युज्जयिन्यां माधवो नाम विप्रः। तस्य ब्राह्मणी प्रसूता बालाऽपत्यस्य रक्षार्थं ब्राह्मणमवस्थाप्य स्नातुं गता। अथ ब्राह्मणाय राज्ञः पार्वणश्राद्धं दातुमाह्वानमागतम्। तच्छ्रु-

२. उरसा गच्छतीति उरगः। (उरसोलोपश्च वा०) इतिगमेर्डः सलोपश्च।

विषादः ।

त्वा ब्राह्मणः सहजदारिद्र्यादचिन्तयत्—'यदि सत्वरं न गच्छामि तदान्यः कश्चिच्छ्रुत्वा श्राद्धं ग्रहीष्यति । यतः ।

आदानस्य प्रदानस्य कर्तव्यस्य च कर्मणः ।
क्षिप्रमक्रियमाणस्य कालः पिबति तद्रसम् ॥ ३८ ॥

किंतु बालकस्यात्र रक्षको नास्ति । तत्किं करोमि । यातु । चिरकालपालितमिमं नकुलं पुत्रनिर्विशेषं बालकरक्षायां व्यवस्थाप्य गच्छामीति ।' तथा कृत्वा गतः । ततस्तेन नकुलेन बालकसमीपमागच्छन्कृष्णसर्पो दृष्ट्वा व्यापाद्य कोपात्खण्डं खण्डं कृत्वा खादितः । ततोऽसौ नकुलो ब्राह्मणमायान्तमवलोक्य रक्तविलिप्तमुखपादः सत्वरमुपगम्य तच्चरणयोर्लुलोठ । ततः स विप्रस्तथाविधं तं दृष्ट्वा बालकोऽनेन खादित इत्यवधार्य नकुलं व्यापादितवान् । अनन्तरं यावदुपसृत्याऽपत्यं पश्यति ब्राह्मणस्तावद्बालकः सुस्थः[२] सर्पश्च व्यापादितस्तिष्ठति । ततस्तं नकुलमुपकारकमिति ज्ञात्वा प्रभावितचेताः सत्वरं विषादमगमत् । अतोऽहं ब्रवीमि—'योऽर्थतत्त्वमविज्ञाय' इत्यादि । राजाऽऽह—'मन्त्रिन्, एष ते निश्चयः ।' मन्त्री ब्रूते—'एवमेव । यतः—

---

१. क्त्वा ल्यपि ६. ४. ३८ । इत्यनुनासिकलोपो वा ।
२. सुखेन तिष्ठतीति: सुस्थः । सुपि स्थः । ३. २. ४ । इति कः ।

अविवेकः। आपद्। पदम्। वृणते।
अज्ञः। विशेषज्ञः। लवः। दुर्विदग्धः।

---

सहसा विदधीत न क्रिया-
मविवेकः परमापदां पदम्।
वृ[३]णते हि विमृश्यकारिणं-
गुणलुब्धाः स्वयमेव संपदः ॥ ३९ ॥

तद्देव, यदिदानीमस्मद्वचनं क्रियते तदा संधाय गम्यताम्।' राजाऽऽह—'कथमेवं संभवति।' मन्त्री ब्रूते—'देव, सत्वरं भविष्यति। यतः—

अज्ञः सुखमाराध्यः सुखतरमाराध्यते विशेषज्ञः।
ज्ञानलवदुर्विदग्धं ब्रह्मापि तं नरं न रञ्जयति ॥ ४० ॥

विशेषतश्चाऽयं धर्मज्ञो राजा सर्वज्ञो मन्त्री च। ज्ञातमेतन्मया पूर्वं मेघवर्णवचनात्तत्कृतकार्यसंदर्शनाच्च।

राजाऽऽह—'अलमुत्तरोत्तरेण। यथाऽभिप्रेतमनुष्ठीयताम्।' एतन्मन्त्रयित्वा गृध्रो महामंत्री 'तत्र यथार्हं कर्तव्यम्' इत्युक्त्वा दुर्गाऽभ्यन्तरं चलितः। ततः प्रणिधिबकेनाऽऽगत्य राज्ञो हिरण्यगर्भस्य निवेदितम्— 'देव, संधिं कर्तुं महामंत्री गृध्रोऽस्मत्समीपमागच्छत्।' राजहंसो ब्रूते—'मंत्रिन्' पुनः सम्बन्धिना केनचिदत्राऽऽगन्तव्यम्।' सर्वज्ञो विहस्याऽऽह—'देव, न

---

३. वृञ् वरणे-क्र्यादेर्लटि बहुवचने।

पायसः । लुब्धः । स्तब्धः ।
छन्दानुरोधः । याथातथ्यम् ।

---

शंकास्पदमेतत् । यतोऽसौ महाशयो दूरदर्शी । अथवा स्थितिरियं मन्दमतीनाम् । कदाचिच्छंकैव न क्रियते । कदाचित्सर्वत्र शंका ।

> दुर्जनदूषितमनसः सुजनेष्वपि नास्ति विश्वासः ।
> बालः पायसदग्धो दध्यपि फूत्कृत्य भक्षयति ॥ ४१ ॥

तद्देव, यथाशक्ति तत्पूजार्थं रत्नोपहाराऽदिसामग्री सुसज्जीक्रियताम् ।' तथाऽनुष्ठिते सति स गृध्रो मंत्री दुर्गद्वाराच्चक्रवाकेणोपागत्य सत्कृत्याऽनीय राजदर्शनं कारितो दत्तासने चोपविष्ट । चक्रवाक उवाच—'युष्मदायत्तं सर्वम् । स्वेच्छयोपभुज्यतामिदं राज्यम् ।' राजहंसो ब्रूते—'एवमेव ।' दूरदर्शी कथयति—'एवमेवैतत् । किंत्विदानीं बहुप्रपञ्चवचनं निष्प्रयोजनम् । यतः ।

> लुब्धमर्थेन गृह्णीयात्स्तब्धमञ्जलिकर्मणा ।
> मूर्खं छन्दानुरोधेन याथातथ्येन पण्डितम् ॥ ४२ ॥

तदिदानीं संधाय गम्यताम् । महाप्रतापश्चित्रवर्णो राजा । राजाऽऽह—'भवन्तो महान्तः पण्डिताश्च तदत्राऽस्माकं यथाकार्यमुपदिश्यताम् ।' मंत्री ब्रूते—'आः, किमेवमुच्यते ।

---

१. ऊर्यादिच्विडाचश्च । १ । ४ । ६१ । इति गतिसंज्ञायां कुगतिप्रादयः । २ । २ । १८ । इति समासः । ततः-समासे सति-समासेऽनञ्पूर्वे क्त्वो ल्यप् । ७ । १ । ३७ । इति ल्यप् तुक्च ।

भंगुरः । तुला । संभाषितः ।

व्यावृत्य ।

---

मृगतृष्णासमं वीक्ष्य संसारं क्षणभंगुरम् ।
सज्जनैः संगतं कुर्याद्धर्माय च सुखाय च ॥ ४३ ॥

तन्मम संमतेन तदेव क्रियताम् । यतः ।

अश्वमेधसहस्राणि सत्यं च तुलया कृतम् ।
अश्वमेधसहस्राद्धि सत्यमेवाऽतिरिच्यते ॥ ४४ ॥

अतः सत्याभिधानदिव्यपुरःसरयोरप्यनयोर्भूपालयोः काञ्चनाऽभिधानसन्धिर्विधीयताम् ।' सर्वज्ञो ब्रूते— 'एवमस्तु ।' ततो राजहंसेन राज्ञा वस्त्रालंकारोपहारैः स मंत्री दूरदर्शी पूजितः प्रहृष्टमनाश्चक्रवाकं गृहीत्वा राज्ञो मयूरस्य संनिधानं गतः । तत्र चित्रवर्णेन राज्ञा सर्वज्ञो गृध्रवचनाद्बहुमानदानपुरःसरं संभाषितस्तथाविधं सन्धिं स्वीकृत्य राजहंससमीपं प्रस्थापितः । दूरदर्शी ब्रूते—'देव, सिद्धं नः समीहितम् । इदानीं स्वस्थानमेव विन्ध्याचलं व्यावृत्य प्रतिगम्यताम् ।' अथ सर्वे स्वस्थलं प्राप्य मनोऽभिलषितं प्राप्नुवन्निति । विष्णुशर्मणोक्तं—'अपरं किं कथयामि, कथ्यताम् ।' राजपुत्रा ऊचुः— 'तव प्रसादाद्राज्यव्यवहाराऽङ्गं ज्ञातम् । ततः सुखिनो भूता वयम् ।' विष्णुशर्मोवाच—'यद्यप्येवं तथाप्यपरमपीदमस्तु—

---

१. भञ्जभासमिदो घुरच् । ३ । २ । १६१ । इति घुरच् ।

माण्डलिकः ।

---

श्रीमान् धवलचन्द्रोऽसौ जीयान्माण्डलिको रिपून् ।
येनाऽयं संग्रहो यत्नाल्लेखयित्वा प्रचारितः ॥ ४९ ॥

**इति हितोपदेशे संधिर्नाम चतुर्थः कथासंग्रहः समाप्तः ।**

समाप्तोऽयं हितोपदेशः ।

शुभं भूयात् ।

# हितोपदेशस्य

## विशेष

## शब्दार्थ सूची

| पृष्ठे | शब्दाः | अर्थाः | पृष्ठे | शब्दाः | अर्थाः |
|---|---|---|---|---|---|
| १ | पाटवम् | चतुराई | | अभिज्ञाम् | जानने वालों को |
| | अहार्यत्वात् | चुराई न जाने से | | अपेयाः | न पीने लायक |
| | अनर्घत्वात् | अमूल्य होने से | | भवन्तःप्रमाणम् | आप मालिक हैं |
| | अक्षयत्वात् | नष्ट न होने से | ६ | प्रासादः | महल |
| | प्रतिपत्तये | ज्ञान के लिये | | विनोदेन | खेल से |
| | भाजने | बर्तन में | | असाधनः | साधन रहित |
| २ | उच्छेदि | नाशकरने वाला | | कूर्मः | कछुआ |
| | अविवेकिता | अविचार | | आखुः | चूहा |
| | उद्विग्नमनाः | दुःखी मन वाला | | अनभिमतम् | अनिष्ट वा बुरा |
| | सकृद् | एकवार | ७ | प्रच्छन्नोभूत्वा | छिपकर |
| ३ | गणः | समुदाय | | वियति | आकाश में |
| | कठिनी | कलम वा खडिया | | निर्जने | एकान्त में |
| | सुसंभ्रमाद् | एकदम या गौरवसे | | पंके | कीचड़ में |
| | तमः | अन्धेरा | ८ | अनारुह्य | नपड़कर, नचढ़कर |
| ४ | निहत्य | दूरकर, मार कर | | मारात्मके | मारने वाले में |
| | मारकतीं | मरकत मणि की | | गलितम् | गला हुआ |
| | प्रवीणताम् | चतुराई को | ९ | दुर्निवारः | न हटाने लायक |
| | संभूताः | पैदा हुए | | नीरुजस्य | स्वस्थ का |
| | ग्राहयितुम् | दिलाने को | | प्रतीतः | विश्वासमें आया-हुआ |
| | अद्रव्यनिहिता | कुपात्र में रखी हुई | | धृतः | पकड़ लिया |
| ५ | आकरे | कान वा खान में | १० | अतिरिच्यते | प्रबल होजाता है। |

| पृष्ठे | शब्दाः | अर्थाः |
|---|---|---|
| | प्रकृत्या | स्वभाव से |
| | सुजीर्णम् | अच्छा पचा हुआ |
| ११ | हेममृगस्य | सोने के मृग का |
| | धियः | बुद्धियें |
| | मुखरः | आगे बोलने वाला |
| | स्तम्भोभवति | स्तम्भ बनता है |
| | विस्मयः | आश्चर्य |
| | प्रतीकारः | उपाय |
| | सदसि | सभा में |
| १२ | भुवनत्रयतिलकम् | तीनों लोकों में श्रेष्ठ |
| | संहतिः | मेल |
| | गुणत्वं आपन्नैः | रस्सी बने हुवों से |
| | मत्तदन्तिनः | मत्त हाथी |
| १३ | गण्डकी | नदी विशेष |
| | विवरः | बिल |
| | अपायः | नाश |
| | अवपातः | गिरना |
| | प्रत्यभिज्ञाय | पहचान कर |
| | ससंभ्रमम् | एक दम |
| १४ | खण्डय | काट |
| | सोढुम् | सहारने के लिये |
| | सन्निमित्ते | अच्छे कार्य में |
| १५ | पुलकितः | प्रसन्न |
| | अवज्ञा | अनादर |
| | आमिषम् | मांस |
| | खगः | पक्षी |
| | प्रबोध्य | कह कर |
| १६ | अरण्यानी | जंगल |
| | सुललितम् | सुन्दर |
| | उपसृत्य | आगे बढ़कर |
| १७ | जीवलोकम् | संसार को |
| | मरीचिमाली | सूर्य |
| | पर्कटीवृक्षः | पाकड़ का वृक्ष |
| | कोटरे | बिल में, खोल में |
| | दुर्विपाकात् | बुरे कर्मफल से |
| १८ | शावकान् | बच्चों को |
| | संनिधाने | पास |
| | अपसर | हट |
| | वध्यः | मारने लायक |
| | चान्द्रायणव्रतम् | ऐसा व्रत जिस में चांद को देखकर खाया जाय |
| १९ | विश्वासभूमयः | विश्वास स्थान |
| | प्रस्तुवन्ति | प्रस्ताव करते हैं |
| | वयः | अवस्था |
| | अरौ | शत्रु में |
| | द्रुमः | वृक्ष |
| | सूनृता | कोमल और सच्ची |
| | अध्यवसितम् | निश्चय किया |
| | विवदमानानाम् । | परस्पर झगड़ते हुवों के |

| पृष्ठे | शब्दाः | अर्थाः | पृष्ठे | शब्दाः | अर्थाः |
|---|---|---|---|---|---|
| | ऐकमत्यम् | एक सम्मति | | अर्थी | सेवक व भिखारी |
| २० | स्वच्छन्दः | इच्छानुसार | | विश्रब्धे | विश्वासी में |
| | विलपद्भिः | विलापकरतेहुवोंने | | असत्यसन्धम् | झूठे को |
| | जिज्ञासा | जानने की इच्छा | | मशकः | मच्छर |
| | अस्थीनि | हड्डियें | २४ | वातेन | वायु से |
| | स्नेहानुवृत्तिः | प्रेम | | स्तब्धीकृत्य | निश्चय कर के |
| २१ | अल्पधीः | कम अक्कल | | क्षिप्तेन | फेंके हुए से |
| | निरस्तपादपः | वृक्ष शून्य | | अत्युत्कटः | बड़ा |
| | वसुधा | पृथिवी | | अनघ : | पापरहित |
| | निभृतम् | चुपचाप | २५ | प्रभवन्ति | समर्थ होते हैं |
| | सस्य पूर्णक्षेत्रम् | धान्य भरा खेत | | सुश्लिष्टेन | मिले हुए से |
| | पाशः | फाही, जाल | | पावकः | आग |
| | उत्कृत्यमानः | काटा जाता हुवा | | नौः | नौका |
| २२ | असृक् | लहू | | व्यापादयिष्यामि | मार दूंगा |
| | उल्लासितः | खुश | | दाक्षिण्यम् | चतुराई व अनुकूलता |
| | त्रायस्व | रक्षा कर | | | |
| | स्नायुः | नाड़ी व नसें | २६ | आप्यायितः | खुश कर दिया |
| | भट्टारकवारः | मंगलवार | | घर्मार्तम् | धूप से सताये को |
| | आच्छाद्य | ढककर | | आकृष्टिमन्त्रोपमम् | वश करने वाले मंत्र के समान |
| | प्रदोषकाले | सायंकाल | | | |
| | अन्विष्य | ढूंढ कर | | याञ्चा | मांगना |
| | अवधीरितम् | न सुना हुवा | | नैष्ठुर्यम् | कठोरता |
| | वञ्चकः | ठग | | अस्तब्धत्वम् | चंचलता |
| २३ | नृशंसेभ्यः | बुरे आदमियों से | २७ | विवरम् | बिल |
| | मिथ्योपचारैः | झूठे व्यवहारों से | | आयतनम् | स्थान |

| पृष्ठ | शब्दाः | अर्थाः |
|---|---|---|
| | संवर्धयिष्यति | बढ़ायेगा |
| २८ | धुरीणः | अग्रणी |
| | रत्नाकरः | समुद्र |
| | उपाख्यानम् | कथा |
| | आवसथः | स्थान, घर |
| | परिव्राट् | संन्यासी |
| | नागदन्तः | कीली ( खूंटी ) |
| २९ | उत्प्लुत्य | उछल कर |
| | जर्जरवंशखण्डेन | फटे बांस के टुकड़े से |
| | अपकारी | नुकसान करने वाला । |
| | खनित्रम् | कुदाली |
| | सत्वम् | बल |
| ३० | कुसरितः | छोटी नदियां |
| | सत्रासम् | भय के साथ |
| | अनलः | आग |
| | उपचारः | व्यवहार, सत्कार |
| | निर्वेदम् | ग्लानि को |
| | आस्पदम् | स्थान |
| ३१ | परपिण्डेन | दूसरे के टुकड़े से |
| | परिच्छेदः | इयत्ता ( हद्द ) |
| ३२ | जनपदः | शहर |
| | निरायासम् | विना प्रयत्न |
| | निर्वृत्तिः | शान्ति |
| | परिधानम् | वस्त्र |
| ३३ | पादरजः | पांव की मट्टी |
| | लोलः | चंचल |
| | फेनः | झाग |
| | अर्गलः | किवाड़ रोकनेकी लकड़ी |
| | परीवाहः | प्रवाह |
| | घोराकृतिः | भयानकशकलवाला |
| | घनघोरम् | भयंकर |
| ३४ | उरसि | छाती में |
| | गुणः | धनुषकी डोरी |
| | कोदण्डम् | धनुष |
| | विशिष्टेभ्यः | श्रेष्ठ पुरुषों को |
| | वित्तम् | धन |
| ३५ | पयोधराः | बादल |
| | स्वविषयः | स्वदेश |
| | लांगूलः | पूंछ |
| | द्विपेन्द्रः | हाथी |
| | निपानम् | पाड़छा, चौबच्चा |
| | प्रणयः | प्रेम व प्रीति |
| ३६ | पंकमग्नः | कीचड़ में फंसा हुवा |
| | आरूढः | चढ़गया |
| | औरसः | अपना लड़का |
| | निर्विशेषम् | की तरह |
| ३७ | आसन्नः | नज़दीक |
| | कटकः | छावनी |
| | किम्वदन्ती | अफ़वाह |

| पृष्ठ | शब्दाः | अर्थाः | पृष्ठ | शब्दाः | अर्थाः |
|---|---|---|---|---|---|
| | मरणं साधयितव्यम् | मारना है | | धुरि | आगे |
| ३८ | निरूपितः | निश्चय किया गया है | | जानु | गोड़ा |
| | अभिजनः | जन्म-भूमि, कुल | | प्रत्यूहः | विघ्न |
| | परावृत्य | लौट कर | | महाकायः | बड़े शरीर वाला |
| ३९ | श्वापदः | हिंसक पशु | ४४ | कच्छम् | किनारा |
| | विमुग्धः | हतबुद्धि | | नर्दितम् | शब्द किया |
| | काननम् | जंगल | | अवधीरितः | तिरस्कृत |
| ४० | अर्णवः | समुद्र | ४५ | पण्यस्त्री | वेश्या |
| | छिद्रम् | छेद, विघ्न, विपत्ति | | विहारः | बौद्ध आश्रम |
| | मुहुः | बारम्बार | | करपत्रम् | आरी |
| | सन्तानः | विस्तार | | कीलकः | कीला |
| | कर्तरिका | कैंची | | यूथम् | झुण्ड, समूह |
| ४१ | प्रत्यावृत्य | लौटकर | ४६ | अनुजीविना | नौकर ने |
| | असमीक्ष्यकारी | बिना विचारे करने वाला | | विषीदति | दुःखी होता है |
| | ध्रुवम् | निश्चित | | वाराणसी | बनारस |
| | समीहितम् | इष्ट | | रजकः | धोबी |
| | नवोढा | नई विवाहित स्त्री | ४७ | विधुरदर्शनम् | कष्ट में पड़ना |
| ४२ | पिशुनः | चुगली करने वाला | | उपजीवी | नौकर |
| | प्रचुरः | बहुत | | बर्बरः | जंगली |
| | मतिः | विचार | | प्रबुद्धः | जाग उठा |
| | अवक्षयः | नाश | | अन्वेषणम् | ढूंढना |
| | निधिः | खज़ाना | | सरोषम् | क्रोध के साथ |
| ४३ | अंजनवत् | आंख के अंजन की तरह | ४८ | जठरम् | पेट |
| | | | | आयत्तः | आधीन |
| | | | ४९ | उदीरितः | कहा हुआ |

| पृ | शब्दाः | अर्थाः |
|---|---|---|
| | हयाः | घोड़े |
| | नागाः | हाथी |
| | नोदिताः | हांके हुवे |
| | ऊहति | विचार लेता है |
| | वक्त्रम् | मुख |
| | प्रज्ञा | बुद्धिः |
| | अनाहूतः | बिना बुलाया |
| ५० | अवमन्यते | तिरस्कार करता है |
| | प्रमदाः | स्त्रियें |
| | अनुरक्तः | प्रेमी |
| ५१ | अपायः | नाश |
| | पुरःस्फुरन्ती | सामने दीखने वाली |
| | प्रस्तावः | मांग |
| ५२ | अनुजानीहि | आज्ञा दे |
| | कदर्थितः | तिरस्कृत व दूषित |
| | तनूनपात् | अग्नि |
| ५३ | नूपुरम् | पादभूषण |
| | अविषयः | पहुंच से बाहर |
| | विश्वासभूमिः | विश्वासपात्र |
| | उपयोगः | फायदा |
| ५४ | सर्वस्वम् | सब कुछ, सारी संपत्ति |
| | उपायनम् | भेंट |
| | पद्मा | लक्ष्मी |
| | क्रोडः | गोदी |

| पृष्ठे | शब्दाः | अर्थाः |
|---|---|---|
| | अवमन्तव्यः | तिरस्करणीय |
| | अपनीतः | दूर कर दिया |
| ५५ | केसरः | शेर के गले के बाल |
| | लूनम् | कटे हुए को |
| | पुरस्कार्यः | आगे करना चाहिये |
| | अवसन्नः | नष्ट |
| ५६ | केशवः | कृष्ण |
| | चेदिः | देश विशेष |
| | घनध्वनिः | बादल की आवाज़ |
| ५७ | प्रभञ्जनः | वायु |
| | उच्छ्रितः | उठे हुए |
| | सज्जीभूय | तैयार होकर |
| | कुट्टनी | बुरी स्त्री |
| | जनप्रवादः | अफवाह |
| ५८ | मर्कटः | बन्दर |
| | साधयामि | वश करती हूं |
| | आकीर्णानि | फैले हुए |
| | फलासक्ताः | फल खाने में लगे |
| | आहारः | भोजन |
| ५९ | व्ययितम् | खर्च कर दिया |
| | क्रमः | तरीका |
| | अगोचरः | बिना जाना हुवा |
| | अनिवेद्य | बिना कहे |
| | अनवेक्षा | लापरवाही |
| | वैश्रवणः | कुबेर |

| पृष्ठे | शब्दाः | अर्थाः | पृष्ठे | शब्दाः | अर्थाः |
|---|---|---|---|---|---|
| ६० | परीवर्त्तः | बदलना | ६५ | विषदिग्धं | विष मिला |
| | यथावसरम् | मौके पर | | भक्तं | भात |
| | सस्यम् | धान्य | | उद्धरणम् | उखाड़ना |
| | अर्थाधिकारः | धनाधिकार | | व्यलीकानि | अप्रिय काम |
| | परिदेवनम् | दुःखी होना | | कायः | शरीर |
| | सौहार्दम् | मित्रता | | वल्लभः | प्यारा |
| ६१ | निसर्गः | स्वभाव | | चक्षुःआरोपयति | नज़र डालता है |
| | काकी | कव्वी | ६६ | पथ्यं | सुखकारी (ठीक) |
| | कनकसूत्रम् | सोने का हार | | अपास्य | हटा कर |
| | सततम् | लगातार | | पुरस्कृतः | सत्कृत किया है |
| | सोढः | सहन किया | | आर्जवम् | सरलता |
| ६२ | विज्ञप्तः | कहा | | स्वेदनम् | पसीना देना |
| | उपढौकयामः | पहुंचा देते हैं | | अभ्यञ्जनम् | तेल लगाना |
| | विनीतिः | विरुद्ध नीति | | नामितम् | झुकाया हुआ |
| | पञ्चत्वम् | मृत्यु | | अर्दितः | सताया हुआ |
| | शपथम् | सौगन्द | ६७ | निग्रहः | बांधना |
| ६३ | बिम्बम् | परछाई | | न्यस्तः | डाला हुआ |
| | आध्मातः | जला हुआ | | मनाक् | थोड़ा |
| | निहितम् | रखा हुआ | | अश्वतरी | खच्चर |
| | विधृत्य | उठा कर | ६८ | अंगांगिभावः | अङ्ग और अङ्गीपन |
| | आत्ययिकम् | नाश करने वाला | | टिट्टिभः | टटीहरा |
| ६४ | अत्युच्छ्रितः | अत्युन्नत | | आसन्नप्रसवा | जल्द बच्चा देने वाली |
| | विष्टभ्य | जमा कर | | विग्रहीतव्यः | लड़ाई करने योग्य |
| | उपतिष्ठते | ठहरती है | | कृच्छ्रेण | कठिनता से |
| | अयते | आश्रय करता है | | सीदति | दुःखी होता है |

| पृष्ठे | शब्दाः | अर्थाः | पृष्ठे | शब्दाः | अर्थाः |
|---|---|---|---|---|---|
| ६९ | प्रसूता | सू पड़ी (बच्चे दिये) | | विवृतास्यः | मुख फैलाये हुए |
| | निगृहीतः | तिरस्कार किया | | निष्पन्नम् | होगया |
| | गरुत्मान् | गरुड़ | | दृप्यति | अभिमान में आ जाता है। |
| | मौलिः | मस्तक | | | |
| ७० | अनिर्वृतः | दुःखी, बेचैन | ७४ | सज्जीभूय | तैयार होकर |
| | पयोराशिः | समुद्र | | विकृताकारः | बदशकल |
| | मुग्धः | मोहित | | दारुणम् | कठोर |
| | सुनिभृतम् | गुप्त | | अरातिः | शत्रु |
| | प्रत्ययः | विश्वास | | भूतिः | ऐश्वर्य्य |
| | रहसि | एकान्त में | ७५ | निलयः | स्थान, घर |
| ७१ | जलधिः | समुद्र | | खलः | दुष्ट |
| | प्रमेयः | प्रमाण का विषय | | कालाकृष्टः | कालसे खैंचा हुआ |
| ७२ | उच्छ्रितपाणिः | हाथ उठाये हुवे | ७६ | विग्रहः | युद्ध |
| | प्रोत्सारितः | छोड़ा हुआ | | अकर्णधारा | बिना मल्लाह की |
| | मायापटुः | चालाक | | विप्लवेत | डूब जाय |
| | पोतः | जहाज़ | | | |
| | निर्वातः | हवा रहित | ७७ | गिरिः | पर्वत |
| | सृणिः | अंकुश | | दग्धारण्यम् | जला जंगल |
| | धाता | ब्रह्मा | | अनुचरः | नौकर |
| | विकारितः | शत्रु बना दिया | | कौतुकात् | आश्चर्य से |
| | वज्रम् | शस्त्र विशेष | | मरुस्थले | मरुभूमि में |
| | | | ७८ | भुजंगः | सर्प |
| ७३ | कायः | शरीर | | शाल्मली | सींबल |
| | रणम् | युद्ध | | नीडः | घोंसला |
| | जिघांसुः | मारने की इच्छा वाला | | नील (जलद) पटलम् | नीले बादल |
| | उन्नतलांगूलः | पूछ उठाये हुए | | नभस्तलम् | आकाश |

| पृष्ठे | शब्दाः | अर्थाः |
|---|---|---|
| | धारासारः | धाराओं का गिरना |
| ७९ | सीदथ | दुःखो होते हो |
| | अमर्षः | क्रोध |
| | समीक्ष्य | विचारकर |
| | द्वीपी | चीता |
| ८० | परिच्छन्नः | ढकाहुआ |
| | मुमूर्षुः | मरने की इच्छा वाला। |
| | प्रच्छाद्य | ढककर |
| | धूसरः | धूएँ के रंग वाला |
| | धनुः कांडम् | धनुष |
| | सज्जीकृत्य | तैयारकर के |
| | लीलया | खेल से |
| | मृदुः | कोमल |
| | अक्षमः | असमर्थ |
| ८१ | कूप मण्डूकः | कूए का मेंढ़क |
| | शौण्डिकी | कलालिन |
| | वारुणी | शराब |
| | दर्पणः | शीशा |
| | व्यपदेशः | कथन वा कपट |
| | शशी | चन्द्रमा |
| | तृषितः | प्यासा |
| | यूथम् | झुण्ड, समूह |
| ८२ | निमज्जनम् | स्नान |
| | आहतिः | आघात |
| | माविषीदत | मत दुःखो हो |
| | अन्तिकम् | पास |
| ८३ | प्रणिधिः | दूत |
| | बिम्बम् | परछांई |
| | प्रस्थापितः | भेजा |
| | पुरः | आगे |
| ८४ | अवधीयताम् | ध्यान दें |
| | अधिक्षिपति | तिरस्कार करता है |
| | मौलम् | कुलक्रमागत राजपुरुष |
| | विपश्चित् | विद्वान् |
| ८५ | दक्षः | चतुर |
| | प्रगल्भः | शरम न करने वाला |
| | परमर्मज्ञः | दूसरे के रहस्य को समझने वाला |
| | प्रतिभानवान् | ज्ञानी |
| | गृध्रः | गीध ( पक्षी ) |
| | दशाननः | रावण |
| | संयतः | बांधा गया |
| | महोदधिः | समुद्र |
| | वर्तकः | बत्तख़ |
| ८६ | कान्तारम् | जंगल |
| | निर्भरः | अत्यन्त |
| | व्यादानम् | फैलाना |
| | असहिष्णुः | न सहने वाला |
| | पुरीषम् | विष्ठा |
| | काण्डम् | बाण |

| पृष्ठे | शब्दाः | अर्थाः |
|---|---|---|
| ८७ | खेदितः | डराया हुआ |
| | कुसुमम् | फूल |
| | निदानम् | कारण |
| | विवदेत् | झगड़ा करे |
| ८८ | विज्ञः | विद्वान् |
| | उपालम्भनम् | उलाहना |
| | प्रस्तुतः | समयोचित |
| | विजनम् | एकान्त |
| | प्रतिध्वानः | शब्द |
| | नियोगी | नियुक्त |
| | आतुरः | रोगी |
| | प्रहीयताम् | भेजा जाय |
| | चारः | गुप्तचर |
| ८९ | सुनिभृतम् | चुपचाप |
| | निगद्य | कहकर |
| | सुगुप्तम् | छिपा हुआ |
| | षट्कर्णः | छैकानों मेंपहुंचा |
| | प्रतिहारः | द्वारपाल |
| | आवासः | रहने की जगह |
| ९० | कृषिः | खेती |
| | आश्वास्य | तसल्ली देकर |
| | प्राकारः | फसील |
| | अनुसन्धेहि | खोजकर |
| ९१ | अनुतिष्ठ | कर |
| | विपक्षः | शत्रुपक्ष |

| पृष्ठे | शब्दाः | अर्थाः |
|---|---|---|
| | उपान्तः | समीप |
| ९२ | उत्कर्षः | बढ़ना |
| | आधिपत्यम् | अधिकार |
| | परिजनः | सम्बन्धी |
| | सदः | सभा |
| | विषण्णः | दुःखी |
| | विप्रलब्धः | ठगी में आया हुआ |
| | सन्निधानम् | समीपता |
| | रावः | शब्द |
| ९३ | दुरतिक्रमः | अटल, अलंघ्य |
| | उपानत् | जूता |
| | श्रीः | धन, लक्ष्मी |
| ९४ | अपकर्षः | हीनता |
| | परोत्कर्षणम् | दूसरे की बढ़ती |
| | आपन्नः | प्राप्त |
| | प्रबोध्य | समझा कर |
| | कनकम् | सोना |
| ९५ | शिष्टः | भला आदमी |
| | मौहूर्तिकः | ज्योतिषी |
| | विजिगीषुः | जीतने की इच्छा करने वाला। |
| ९६ | व्यूहीकृतः | इकट्ठा किया हुआ |
| | कलत्रम् | स्त्री |
| | फल्गु | सुन्दर, दुर्बल |

| पृष्ठ | शब्दाः | अर्थाः | पृष्ठ | शब्दाः | अर्थाः |
|---|---|---|---|---|---|
| | पदातिः | पैदल | | निष्क्रयः | मूल्य चुकाना |
| | सुभटः | अच्छा लड़ाका | | निस्तारः | छुटकारा |
| | ऊरीकृत्य | स्वीकारकर | १०१ | अनुकम्पनीयः | कृपा करने लायक |
| | प्रतायते | फैलाया जाता है | | अलक्षितः | न देखा हुवा |
| ९७ | उच्छृङ्खलम् | अनियमित | | अन्तःपुरम् | स्त्रियोंकेरहनेकाघर |
| | नियन्त्रितः | बंधा हुआ | १०२ | महासत्वः | बड़े धैर्य वाला |
| | तिमिरम् | अंधेरा | | अविकत्थनः | अनात्मश्लाघी |
| | प्रहितः | भेजा हुआ | | अनिष्ठुरः | कोमल |
| | अधित्यका | पर्वत की ऊपर की भूमि | | प्रस्तुत्य | पेश करके |
| | | | | कोशः | ख़ज़ाना |
| | इङ्गितम् | इशारा | | निध्यर्थी | धनार्थी |
| | आगन्तुः | आने वाला | १०३ | चन्द्रार्धचूडा-मणिः | शिव |
| ९८ | क्रीडासरः | खेलने का सरोवर | | | |
| | अनुरागवान् | प्रेमी | | यक्षेश्वरः | कुवेर |
| | वर्तनम् | जीविका, वेतन | | क्षौरम् | हजामत |
| | ताम्बूलम् | पान | | सुनिभृतम् | चुपचाप |
| ९९ | पाणिः | हाथ | | उद्गारः | मन के भाव |
| | क्रन्दन ध्वनिः | रोने की आवाज़ | १०४ | अवमन्ता | तिरस्कृतकरनेवाला |
| | सूचीभेद्यम् | घना | | रिपुः | शत्रु |
| | विश्रान्ता | आराम से रही | | अवस्कन्दः | आक्रमण |
| | अवलम्बनम् | आश्रय | | | |
| | उपहारः | इनाम | | प्रजागरः | अधिक जागना |
| १०० | वधू | बहू ( स्त्री ) | | अविनयः | गुस्ताखी |
| | प्रबोधिता | जगाई | १०५ | तरुः | वृक्ष |
| | विनियोगः | लगाना | | पानम् | मद्य पीना |

| पृष्ठ | शब्दाः | अर्थाः | पृष्ठे | शब्दाः | अर्थाः |
|---|---|---|---|---|---|
| | मृगया | शिकार खेलना | | आहवः | युद्ध |
| | पारुष्यम् | कठोरपन | | उपजापः | चुगली |
| | उपन्यस्तः | किया गया | | चिरारोधः | देर तक घेरना |
| | अनवधानम् | ध्यान न देना | | भास्करः | सूर्य |
| | दुर्नीतिः | बुरी नीति | | सर्वतः | चारों ओर से |
| | अपथ्यभुक् | कुपथ्यखानेवाला | | ह्रदः | तालाब |
| | दर्पयति | अभिमानी बना देता है | १०९ | वेष्टितः | घेर लिया |
| | | | | दिवि | आकाश में |
| | कौमुदी | चांदनी | | अपास्य | दूर कर, छोड़ कर |
| १०६ | उल्का | (धुँधली) मशाल | | मुधा | व्यर्थ |
| | नियन्तव्यः | रोकना चाहिये | ११० | निमीलति | मर जाता है |
| | आतुरः | रोगी | | सरोरुहम् | कमल |
| | भिन्नसन्धानम् | लड़े हुओं को मिला देना | | खरः | गधा |
| | | | | आघातः | चोट |
| | भिषक् | वैद्य | | अन्तरितः | आड़में किया हुआ |
| | सान्निपातिक कर्म | सरसाम का उपाय | | ग्राहयित्वा | दिला कर |
| | | | | स्कन्धावारः | छावनी वा राजधानी |
| | सुस्थः | स्वस्थ | | | |
| | अदीर्घ सूत्रता | काम में देर न करना | | | |
| | अवरोधः | घेरा | १११ | द्विषः | शत्रु |
| | उपस्तम्भः | आश्रय | | क्लैब्यम् | नामर्दी |
| १०७ | कार्पण्यम् | कंजूसी | | पतिः | मालिक |
| | भटः | योद्धा | ११२ | स्थेयः | विवाद निर्णेता |
| | पुरस्क्रियन्ताम् | इनाम दीजिये | | परकीयः | पराया |
| | आनृण्यम् | उऋण होना | ११३ | सरः | तालाब |
| | | | | धीवरः | झीवर |
| १०८ | नक्रः | नाका | | | |

| पृष्ठे | शब्दाः | अर्थाः | पृष्ठे | शब्दाः | अर्थाः |
|---|---|---|---|---|---|
| | उषित्वा | रह कर | | तुषः | भुस |
| | व्यापादयि-तव्यः | मारना चाहिये | | बालुका | रेत |
| | | | ११८ | मूषिका | चूही |
| | आलापः | बातचीत | | शावकः | बच्चा |
| | दृष्टव्यतिकरः | दृष्ट भेद | | नीवारकणाः | धान के टुकड़े |
| ११४ | अनागत—विधाता | दुःख से पूर्व उपाय करने वाला | | मार्जारः | बिल्ला |
| | | | | आख्यानम् | कहना |
| | प्रत्युत्पन्नमतिः | दुःख आने पर उपाय करने वाला | ११९ | कर्कटकः | केकड़ा |
| | | | | कैवर्तः | भीवर |
| | आलोचितम् | विचारा | | लक्ष्यते | मालूम पड़ता है |
| | अभावि | नहीं होने वाला | १२० | उपकर्ता | उपकार करनेवाला |
| | विषघ्नः | विष से मारा हुआ | | एकैकशः | एक २ |
| | | | | ग्रीवा | गर्दन |
| | अगदः | दवाई | | अचलः | स्थिर |
| | अपसारितः | हटा दिया | | | |
| | गभीरम् | गहरा | १२१ | विषुवत् | समानता |
| | नीरम् | जल | | सक्तुः | सत्तू |
| | | | | मण्डपः | स्थान |
| ११५ | स्थलम् | खुश्की | | आकुलितः | व्याकुल |
| | वर्त्म | मार्ग | | विक्रीय | बेचकर |
| ११६ | विकिरत | फैला दो | | कपर्दकः | कौड़ी |
| | वृत्तम् | हुआ | | शरावः | सकोरा |
| | पक्त्वा | पकाकर | | उपक्रीय | मोल ले कर |
| | दग्ध्वा | जलाकर | | पूगः | सुपारी |
| | भस्म | राख | | सपत्नी | सौकन |
| | शोधनम् | सफाई | | चूर्णितः | पीस डाला |
| ११७ | प्रणयः | नम्रता | | भग्नम् | तोड़ दिया |

| पृष्ठ | शब्दाः | अर्थाः |
|---|---|---|
| १२२ | संकीर्णम् | मिला हुआ |
| | उन्मार्गः | कुमार्ग |
| | वाच्यताम् | निन्दा |
| | परभूमिष्ठः | दूसरे की भूमि पर स्थित |
| | दुर्गः | किला |
| | चन्द्रशेखरः | शिव |
| १२३ | वरयताम् | मांगो |
| | समधिष्ठिता | बैठी हुई |
| | लावण्यम् | सुन्दरता |
| | जगद्घाती | संसार को मारने वाली |
| | प्रमाणपुरुषः | न्याय करने वाला |
| | भट्टारकः | ब्राह्मण |
| १२४ | अवसानम् | समाप्ति |
| | सन्धेयः | मिलाने लायक |
| | विग्राह्यः | लडाई करने लायक |
| | उपेतः | युक्त |
| | व्यपेतः | रहित |
| | विक्रिया | बदलना |
| | विनिपातः | आपत्ति |
| १२५ | सुगुप्तिः | सन्धि व रक्षा |
| | अरातिः | शत्रु |
| | उषितः | रहा |
| १२६ | वञ्चनम् | ठगना |
| | विदग्धता | चतुरता |

| पृष्ठ | शब्दाः | अर्थाः |
|---|---|---|
| | आत्मौपम्यम् | अपने बराबर |
| | छागः | बकरा |
| | प्रकर्षः | अधिकता |
| | कुक्कुरः | कुत्ता |
| १२७ | उह्यते | उठाया है |
| | दोलायमाना | डोलने वाली |
| | दोलायते | डोलती है |
| | खलम् | दुष्ट |
| | जम्बुकः | गीदड़ |
| | सार्थः | साथ |
| | वैकल्यम् | विकार ( रोग ) |
| | भूरिः | अधिक |
| | व्यग्रम् | दुःखी |
| १२८ | कण्टकभुक् | कांटे खाने वाला |
| | परिक्षीणः | कमजोर |
| | महिला | स्त्री |
| | भुजगी | सांपिन |
| १२९ | भूः | भूमि |
| | कूटः | कपट |
| | उपवासः | व्रत |
| | खिन्नः | दुःखी |
| | प्रकृतिः | स्वभाव |
| | कुक्षिः | कुख |
| | विदार्य | फाड़कर |
| १३० | अनुनयः | प्रार्थना |

| पृष्ठे | शब्दाः | अर्थाः |
|---|---|---|
| १३० | मूर्द्धा | मस्तक |
| | इन्धनम् | ईंधन |
| | क्षालयन् | साफ़ करता हुआ |
| | जीर्णः | पुराना |
| | अन्वेष्टुम् | ढूंडने के लिये |
| १३१ | श्रोत्रियः | वेदपाठी |
| | लुलोठ | लुढ़कने लगा |
| | स्नातकः | उत्तीर्ण ब्रह्मचारी |
| | धात्री | दाई |
| | प्रपञ्चः | ढोंग |
| | अपयाति | जाता है |
| १३२ | अनुसन्धेहि | खोज करो |
| | अकाण्डम् | असमय |
| | गात्रम् | अंग |
| | मर्मभेदी | बहुत कष्ट देनें वाला |
| | प्रबुद्धः | जागा हुआ |
| | भेषजम् | दवाई |
| १३३ | वोढुम् | उठाने के लिये |
| | चित्रपदक्रमः | मंडराना |
| | परेद्युः | अगले दिन |
| | विरहः | वियोग |
| | पुरावृत्तम् | पहिले हुआ २ |
| १३४ | शरत् | सर्दी का मौसम |
| | उरगः | सांप |
| | प्रसूता | सू पड़ी |
| | पार्वणश्राद्धम् | पर्वका श्राद्ध |
| १३५ | विषादः | दुःख |
| १३६ | अविवेकः | अविचार |
| | आपद् | आपत्ति |
| | पदम् | स्थान |
| | वृणाते | स्वीकार करता है। |
| | अज्ञः | मूर्ख |
| | विशेषज्ञः | बुद्धिमान् |
| १३७ | लवः | लेश |
| | दुर्विदग्धः | पण्डित(अभिमानी) |
| | पायसः | दूध |
| | लुब्धः | लोभी |
| | स्तब्धः | जड़ |
| | छन्दानुरोधः | आधीनता |
| | याथातथ्यम् | ठीक ठीक |
| १३८ | भंगुरः | नाश होने वाला |
| | तुला | तराजू |
| | संभाषितः | बातचीत की |
| | व्यावृत्य | लौटकर |
| १३९ | माण्डलिकः | राजा |

# गुरुकुल पुस्तक भंडार के कुछ अमूल्य रत्न

## वैदिक पशुयज्ञ मीमांसा

**ले०—प्रो० विश्वनाथ विद्यालङ्कार, गुरुकुल कांगड़ी**

वेदों, ब्राह्मणग्रन्थों, बुद्धभगवान् के वाक्यों, चरकसंहिता, प्रणववाद, महाभारत तथा पुराणों के उदाहरणों द्वारा सिद्ध किया गया है कि वेदों में पशुयज्ञ का निषेध है। विरोधियों का खण्डन बड़े प्रबल प्रमाणों के आधार पर किया गया है। साथ ही मांस भक्षण के सम्बन्ध में भी वेदों के प्रमाण एकत्र किये गये हैं। मूल्य ॥।)

## वीर माता का उपदेश

**ले०—प्रो० विश्वनाथ विद्यालंकार, गुरुकुल कांगड़ी।**

महाभारत के उपदेशप्रद आख्यान के आधार पर दर्शाया गया है कि भारत की वर्तमान राजनैतिक प्रगति में माताओं को अपने पुत्रों के प्रति किस प्रकार का उपदेश देना चाहिये। मूल्य ।)



## वैदिक-उपदेश-माला

**ले०—पं० देवशर्मा जी विद्यालङ्कार**

यह पुस्तक ऋषि दयानन्द की जन्म शताब्दी के उपलक्ष्य में रची गई थी। इसमें आत्मा को उच्च बनाने वाले १२ उपदेश हैं जो एक-एक महीने के लिये लिखे गये हैं। इन उपदेशों को पढ़ते हुए आत्मा में महान् आदर्शों का स्वयमेव सञ्चार होने लगता है। जिन्हें आध्यात्मिक प्रसाद का आनन्द लेना हो उन्हें ये उपदेश अवश्य पढ़ने चाहियें। मूल्य केवल ॥) है।

# भारतवर्ष का इतिहास

[ प्रथम खण्ड ]

## लेखक—आचार्य रामदेव जी

इस पुस्तक को पढ़ने से आपको पता चलेगा कि हमारे पूर्वज जङ्गली नहीं थे। वे सभ्य थे, और इतने सभ्य थे कि आजकल के सभ्य कहलाने वाले उनके सामने जंगली ठहरते हैं। इतना बड़ा दावा इस पुस्तक में बेदलील नहीं किया गया। बड़ी खोज से, पूर्वीय तथा पाश्चात्य विद्वानों के सैकड़ों ग्रन्थों की छानबीन करके, आचार्य रामदेव जी ने अपने कथन की पुष्टि की है। अब तक किसी दूसरे विद्वान् ने वैदिक काल से लेकर महाभारत काल तक प्राचीन भारत के धार्मिक, सामाजिक और नैतिक जीवन का सिलसिले वार इतिहास नहीं लिखा, इस लिये यह ग्रन्थ हिन्दी जगत् में अनूठा है। इस पुस्तक की ७००० ( सात हजार ) प्रतियां छप चुकी हैं। पुस्तक धड़ाधड़ बिक रही है। बड़े आकार के ३८० पृष्ठ; छपाई सफ़ाई सुन्दर; सचित्र, परन्तु मूल्य केवल १॥)

[ द्वितीय खण्ड ]

## लेखक--आचार्य रामदेव जी

इस ग्रन्थ में भारतवर्ष के इतिहास के प्रथम खण्ड के सिलसिले में, महाभारत काल से लेकर बुद्ध के जन्म के पूर्व तक का इतिहास है। इसका एक-एक पृष्ठ मौलिक खोजों से परिपूर्ण है। यह खण्ड चार भागों में विभक्त है:—

१. प्रथम भाग में महाभारत कालीन सभ्यता का मनोरञ्जक तथा ऐतिहासिक वर्णन विशद रूप में दिया गया है।

२. द्वितीय भाग में महाभारत के बाद से बुद्ध के जन्म से पूर्व तक का वह खोजपूर्ण इतिहास है जो अब तक किसी लेखक ने नहीं लिखा।

३. तृतीय भाग में शुक्रनीतिसार के आधार पर बताया गया है कि प्राचीन भारत में तोप, बन्दूक बारूद का ज्ञान था। आचार्य शुक्र के दिमाग़ की करामातें देख कर पाठक दांतों तले अंगुली दबायेंगे।

४. चतुर्थ भाग में प्राचीन भारत की चीन, मिस्र, असीरिया, बैबीलोन, ईरान अरब, यूनान आदि से सम्बन्ध ऐतिहासिक प्रमाणों से सिद्ध किया गया है यह सब कुछ पढ़ कर प्रत्येक भारतीय की छाती गर्व से फूल उठेगी।

यह महान् ग्रन्थ ४२५ पृष्ठों में समाप्त हुआ है। छपाई, सफ़ाई सुन्दर कागज़ बढ़िया। मूल्य केवल १॥)

